प्रत्यवमर्शो नास्तीति तन्निर्विकल्पकमित्युच्यते । द्वितीयपिण्डग्रहणे तु तस्य पूर्वदृष्टसजातीयतया प्रत्यवमर्शोऽस्तीति तत् सविकल्पकमित्युच्यते । एतेन निर्विकल्पके विशेषरहितस्य सन्मात्रस्य ग्रहणमिति मतं, जात्यादीनां पृथक्पृथक् ग्रहणमिति च मतं न सिद्धान्तिनामभिमतमित्युक्तं भवति ॥ १९ ॥

प्रथम पिण्ड= प्रत्यवमर्शरहित प्रथम वस्तु का प्रथम बार ज्ञान **निर्विकल्पक** कहलाता है, द्वितीय पिण्डग्रहण में तो उस जैसी पूर्वदृष्ट वस्तु रहने से प्रत्यवमर्श रहता है अतएव द्वितीय पिण्डग्रहण **सविकल्पक** ज्ञान होता है ॥१९ ॥

**एतदिन्द्रियसापेक्षमनपेक्षं च दृश्यते ।**
**अनपेक्षं स्वतः सिद्धं दिव्यं चेति द्विधा मतम् ॥२० ॥**

एतत् साक्षात्त्वम् । इन्द्रियेति; प्राकृतबाह्येन्द्रियेत्यर्थः । अनपेक्षम्; इन्द्रियानपेक्षम् । तत्रेन्द्रियापेक्षमयोगिष्वस्मादृशेषु सुप्रसिद्धमिति तदुपेक्ष्य तदनपेक्षमुपपादयति—अनपेक्षमिति । स्वतः सिद्धम्; स्वप्रयत्नेन योगादिना सिद्धम् । दिव्यं स्वप्रयत्नमनपेक्ष्य देवप्रसादात् समासादितम् । अत्रेदं बोध्यम्—योगिप्रत्यक्षं प्रकृष्टादृष्टविशेषजं युक्तावस्थायां मनोमात्रजन्यम्, अयुक्तावस्थायां तु बाह्येन्द्रियजन्यम् । दिव्यप्रत्यक्षमपि ईश्वरप्रसादसमधिगतदिव्येन्द्रियजन्यमेव । यथोक्तम्,

"दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।
तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यसि ॥"

इति ॥ २० ॥

यह सविकल्पक साक्षात्कार= प्रत्यक्ष दो प्रकार का होता है- इन्द्रियसापेक्ष और इन्द्रियानपेक्ष । **इन्द्रियानपेक्ष** स्वतः सिद्ध और दिव्य भेद से दो प्रकार का होता है ॥२० ॥

**योगजं तु स्वतः सिद्धमन्यत्स्वामिप्रसादजम् ।**
**अर्वाचीनमिदं सर्वमामनन्ति विचक्षणाः ॥ २१ ॥**

अर्वाचीनम्; आधुनिकम् । इदं सर्वम्; अयोगियोगिदिव्यरूपमित्यर्थः ॥२१ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वतःसिद्ध प्रत्यक्ष योगज= योगादि से सिद्ध होता है तथा दिव्य प्रत्यक्ष भगवत्कृपा से होता है। विद्वान् इस अयोगि-योगि-दिव्यरूप प्रत्यक्ष को अर्वाचीन= आधुनिक कहते हैं ॥२१ ॥

नित्यमुक्तेश्वरज्ञानमनर्वाचीनमुच्यते ।
स्मृतिः प्रमैव प्राचीनानुभवाज्जायते हि सा ॥ २२ ॥

अनर्वाचीनम्; अनाधुनिकं । मुक्तानां मुक्तिप्राप्त्यनन्तरं दृष्टं ज्ञानं नित्यमेवेत्यर्थः । स्मृतेरप्रामाण्यं नैयायिकादय आमनन्ति; तन्निराकरोति—स्मृतिरिति । प्रमैव; प्रत्यक्षप्रमैव । तत्र हेतुमाह—प्राचीनेति ॥ २२ ॥

नित्य, मुक्त और ईश्वर के ज्ञान को अनर्वाचीन= अनाधुनिक कहा जाता है । स्मृति प्रत्यक्ष प्रमा ही है, क्योंकि वह प्राचीन अनुभव से ही उत्पन्न होती है ॥२२ ॥

सदृशादृष्टचिन्ताद्यैः संस्कारोद्बोधने सति ।
स्मृतिवत्प्रत्यभिज्ञापि प्रत्यक्षेऽन्तर्भवत्यसौ ॥ २३ ॥

सदृशेत्याद्यर्धं पूर्वान्वयि । प्रत्यभिज्ञा; सोऽयं देवतदत्त इत्यादिरूपा ॥२३ ॥

सादृश्य, अदृष्ट या चिन्ता आदि के कारण स्मृति के बीजभूत संस्कार का उद्बोधन होने पर स्मृति होती है । स्मृति के समान प्रत्यभिज्ञा का भी अन्तर्भाव प्रत्यक्ष में होता है ॥२३ ॥

पुण्यपूरुषनिष्ठापि प्रतिभात्रैव संमता ।
यथार्थं सर्वविज्ञानमिति यामुनभाषितम् ॥ २४ ॥

प्रतिभा; "बुद्धिर्नवनवोन्मेषशालिनी प्रतिभा मता" इति लक्षिता । अत्रैव; प्रत्यक्ष एव । सर्वविज्ञानम्; परैरयथार्थतयाभ्युपगतं भ्रमादिकमपि यथार्थमेवेत्यर्थः । तथाहि—पञ्चीकरणप्रक्रियया सर्वेषु प्राकृतेषु वस्तुषु सर्वभूतांशाः सन्त्येव । अत एव शुक्तिकायामपि रजतांशस्य विद्यमानत्वात् रजतसंबन्धि भास्वरत्वादि प्रतीयते । अतस्तत्र रजतज्ञानं नात्यन्तायासत्यालम्बनम्, किंतु सत्यालम्बनमेव । तर्हि तस्य भ्रमत्वव्यवहारः कथमिति चेत्, विषयव्यवहारबाधात् । अयं भावः—पञ्चीक-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

रणरीत्या सर्वत्र सर्वांशानां सत्त्वेऽपि यत्र वस्तुनि यस्यांशा भूयांसस्तत्र तत्त्वेन व्यवहारः। शुक्तिकायां तु रजतांशस्याल्पीयस्त्वात् तत्र रजतत्वव्यवहारः पश्चाद्बाध्यत इति तज्ज्ञानस्य भ्रमत्वव्यवहार इति। एवं स्वप्नादिज्ञानमपि सत्यमेव। तत्तत्पुरुषकर्मानुरूपं तत्तत्पुरुषमात्रानुभवाय तत्तत्कालिकान् पदार्थान् स्वप्ने परमपुरुषः सृजतीति सिद्धान्तात् ॥ २४ ॥

पुण्यात्मा पुरुषनिष्ठ **प्रतिभा** भी प्रत्यक्ष ही कही जाती है। यामुनाचार्य ने कहा है कि सर्वविज्ञान= सभी ज्ञान यथार्थ ही होते हैं ॥२४॥

**भूतले तु घटाभावो भूतलात्मैव नेतरः।**
**मृद् घटस्य प्रागभावो ध्वंसस्तस्य कपालकम् ॥ २५ ॥**

अभावस्य पदार्थान्तरत्वं निराकरोति—भूतल इति। घटभावो भूतलरूप एव। घटस्य प्रागभावो मृद्रूप एव। एवं घटध्वंसः कपालरूप एवेत्यर्थः ॥ २५ ॥

भूतल पर घटाभाव भूतलरूप ही होता है, इसके अतिरिक्त कुछ भी नहीं होता है। घट का **प्रागभाव** भी मृद्रूप ही होता है, इसी प्रकार घट का **ध्वन्साभाव** कपालरूप ही होता है ॥२५॥

**स्वासाधारणधर्मो हि भेदशब्देन कीर्त्यते।**
**शब्दस्वाभाव्यजा क्वापि प्रतियोगित्वधीः कृता।२६।**

अन्योन्याभावस्य पार्थक्यं निराकरोति—स्वासाधारणेति। घटस्य पटाद्भेदो नाम घटत्वरूप एव। तर्हि घटत्वमित्यत्र न पटाकाङ्क्षा, भिन्न इति व्यवहारे तु पटादिति प्रतियोग्याकाङ्क्षा कुत इत्यत्राह—शब्दस्वाभाव्येति। शब्दस्वभावप्रयुक्तैषा व्यवस्थेति भावः ॥ २६ ॥

किसी भी एक वस्तु का अपना असाधारण धर्म **भेद** शब्द से कहा जाता है और यह **भेद** शब्द कहीं भी प्रतियोगी की आकांक्षा करता है, क्योंकि यह शब्द का स्वभाव है। अतएव **अन्योन्याभाव**, यथा- घटः पटाद् भिन्न, घटत्वरूप ही होता है, तब घटत्व में पटाकांक्षा नहीं होती अपितु भिन्नः- ऐसा व्यवहार होने पर पटात्-ऐसी प्रतियोग्याकांक्षा होती है ॥२६॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अन्तःकरणचैतन्यं तवृत्त्या विषयेण च।
चैतन्यं समतापन्नं साक्षात्कारमजीजनत्॥ २७॥
इत्यादि वचनं सर्वं परोक्तं नात्र संमतम्।
सामान्यं समवायश्च विशेषो नात्र संमतः॥ २८॥

अत्र श्रीशांकराणां मतमनूद्य तत्र स्वानभिमतिमाह—अन्तःकरणेति। चैतन्यमात्माभिन्नं ब्रह्मैव। तच्च चैतन्यमुपाधिभेदात् त्रिधा; प्रमातृचैतन्यम्, प्रमाणचैतन्यम्, प्रमेयचैतन्यं चेति। तत्र यदा चैतन्यमन्तःकरणावच्छिन्नं भवति, तदा तत्र प्रमातृत्वव्यवहारः। वस्तुतोऽन्तःकरणमेव प्रमातृ। तन्निष्ठं प्रमातृत्वं तदवच्छिन्ने चैतन्ये भासत इत्यर्थः। यदा चैतन्यमन्तः करणवृत्त्यवच्छिन्नं भवति, तदा तत्र प्रमाणत्वव्यवहारः। यदा तु घटादिविषयावच्छिन्नं भवति, तदा प्रमेयत्वव्यवहारः इत्यर्थः। एतत्सर्वं नात्र संमतम्। तथा सामान्यसमवायविशेषाख्याः पदार्थाः न पृथक्परिगणनीयाः, तेषामुक्तेष्वेवान्तर्भावात्. तथाहि—सामान्यं नाम सर्वव्यक्त्यनुगत आकारापरपर्यायोऽवयवसंस्थानविशेष एव। समवायोऽपि संयुक्तविशेषणतैव, नान्यत्पदार्थान्तरम्। विशेषोऽपि तत्तत्पदार्थासाधारणधर्मान्नातिरिच्यते॥२७-२८॥

'अन्तःकरणावच्छिन्न चैतन्य जब अन्तःकरणवृत्ति तथा विषय के साथ संयोग होने से चैतन्य से समता= अभिन्नता प्राप्त करता है तब साक्षात्कार= प्रत्यक्ष होता है'- इत्यादि वचन, ऐसे ही अन्य वचन जो दूसरों ने कहे हैं वे सब हम सिद्धान्ती को सम्मत नहीं है। हम सिद्धान्ती को सामान्य, समवाय और विशेष पदार्थ भी स्वीकार नहीं हैं॥२७-२८॥

संख्यादिगुणवर्गस्य गुणपार्थक्यकल्पनम्।
सूत्रकारविरुद्धं यत्तत्सर्वं परिहास्यते॥ २९॥

अद्रव्येष्वपि दशातिरिक्तानामनभ्युपगममाह—संख्यादीति। संख्यापरिमाणादीनां पृथक्त्वकल्पनमित्यादिकं सूत्रकारमतविरुद्धमिति तत्सर्वं नानुमन्यत इत्यर्थः। संख्यादीनां क्लृप्तेष्वन्तर्भावप्रकारोऽत्रैव दशमेऽद्रव्यपरिच्छेदे वक्ष्यते॥२९॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

संख्या आदि जो सूत्रकार के द्वारा अद्रव्य में अभिहित दस गुणों से पृथक् कहे गये हैं वे तो सूत्रकार मत के ही विरुद्ध हैं, अतएव यह सब कथन स्वतः ही निरस्त हो जाता है ॥२९ ॥

इति वेदान्तकारिकावल्यां प्रत्यक्षनिरूपणं प्रथमं प्रकरणम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## २. अनुमाननिरूपणम्

**अनुमित्यात्मविज्ञानेऽनुमानं करणं स्मृतम्।**
**तच्च लिङ्गपरामर्शस्तद्धेतुर्व्याप्तिधीर्मता ॥ १ ॥**

प्रत्यक्षनिरूपणानन्तरमनुमानं निरूपयति—अनुमितीति। आत्मशब्दः स्वरूपपरः। अनुमितिरूपे ज्ञाने करणमनुमानमित्यर्थः। अनुसृत्य प्रवर्तमानं मानमनुमानम्। लिङ्गप्रत्यक्षमनुसृत्य प्रवर्तमानत्वादनुमानं भवति। तदाह न्यायभाष्यकारः—तत्पूर्वकमनुमानमिति। योगरूढं चेदम्। अतः स्मृतिप्रत्यभिज्ञयोः प्रत्यक्षानुगामित्वेऽपि नानुमानत्वम्। लिङ्गपरामर्श इति। लिङ्गस्य साध्यचिह्नभूतस्य हेतोः परामर्शः विवेचनं,साध्यव्याप्यतया पक्षवृत्तितया च विविच्य ज्ञानमित्यर्थः। व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्श इति पर्यवसितम्। तद्धेतुः; परामर्शहेतुः। व्याप्तिधीः, व्याप्तिज्ञानम्। अनुमितिं प्रति व्याप्तिज्ञानं करणम्। व्यापारवदसाधारणकारणं करणम्। परामर्शो व्यापार इति प्राञ्चः। नव्यास्तु—परामर्श एव करणम्। व्यापारवत्त्वं न करणलक्षणनिविष्टम्। अपितु साधकतमं करणमित्येव तल्लक्षणम्। परामर्शजनकतया अङ्गीकृतं व्याप्तिज्ञानं तु घटं प्रति कुलालपितेवान्यथासिद्धमित्याहुः। तत्र नव्यमतमवलम्ब्य लिङ्गपरामर्शस्यात्र करणत्वोक्तिः ॥ १ ॥

अनुमितिरूप ज्ञान में जो करण होता है वह **अनुमान** प्रमाण कहलाता है। लिङ्ग परामर्श ही **अनुमान** है और परामर्श का हेतु व्याप्तिज्ञान होता है ॥१ ॥

**साध्याभावाधिकरणावृत्तित्वं व्याप्तिरुच्यते।**
**व्याप्यस्य पक्षवृत्तित्वधीः परामर्शनामभाक् ॥ २ ॥**

साहचर्यनियमो व्याप्तिरिति लक्षणे नियमपदार्थं नञ्द्वयघटितवाक्येन विविनक्ति—साध्याभावेत्यादि। साध्यस्य वह्न्यादेर्योऽयमभावः, तदधिकरणं तटाकादिः, तदवृत्तित्वं धूमादेरिति लक्षणसमन्वयः। परामर्शलक्षणमाह— व्याप्यस्येति। व्याप्यस्य हेतोः पक्षे पर्वतादौ वर्तमानत्वधीः परामर्श इत्यर्थः ॥ २ ॥

साध्याभाव के अधिकरण में हेतु का न होना **व्याप्ति** है। पक्ष में रहने वाले व्याप्य हेतु का ज्ञान **परामर्श** कहलाता है ॥२ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

**तज्जा पक्षे साध्यमतिरनुमित्यात्मिका मता ।**
**भूयिष्ठसाहचर्यैकज्ञानेन व्याप्तिधीर्भवेत् ।। ३ ।।**

तज्जा; परामर्शजा । पक्षे; पर्वतादौ । साध्यस्य वह्न्यादेः मतिः-अनुमितिरित्यर्थः । व्याप्तिज्ञानोत्पत्तौ कारणमाह—भूयिष्ठेति । साहचर्यं सामानाधिकरण्यम्; भूयिष्ठेन साहचर्यज्ञानेन, साहचर्यस्य भूयोदर्शनेनेत्यर्थः ।। ३ ।।

पक्ष में परामर्शजन्या साध्यमति अनुमिति कही जाती है । साध्य और हेतु के परस्पर भूयिष्ठ साहचर्यदर्शन से **व्याप्तिज्ञान** होता है ।।३ ।।

**तत्सपक्षे सपक्षस्तु पूर्वं निश्चितसाध्यकः ।**
**संदिग्धसाध्यकः पक्षो विपक्षस्तदभाववान् ।। ४ ।।**

तत्; साहचर्यज्ञानम् । निश्चितसाध्यवान् सपक्षः, यथा धूमेन वह्नौ साध्ये महानसादिः । संदिग्धसाध्यवान् पक्षः, यथा तत्रैव पर्वतादिः । निश्चितसाध्याभाववान् विपक्षः, यथा तत्रैव ह्रदादिः ।। ४ ।।

वह साहचर्यदर्शन= साहचर्यज्ञान सपक्ष में होना चाहिए । **सपक्ष** तो वह होता है, जिसमें साध्यधर्म निश्चित रहता है । जिसमें साध्यधर्म संदिग्ध होता है, वह **पक्ष** कहलाता है । **विपक्ष** वह कहलाता है, जिसमें साध्य का अभाव निश्चित होता है ।।४ ।।

**अन्वयी व्यतिरेकी च किंच हेतुर्द्विलक्षणः ।**
**व्यभिचारी विरुद्धश्चासिद्धः सत्प्रतिपक्षकः ।। ५ ।।**

**बाधितश्चेति पञ्चैते हेत्वाभासा न साधकाः ।**
**एवं स्वार्थानुमानस्य प्रपञ्चस्तु निरूपितः ।। ६ ।।**

हेतुं विभजते—अन्वयीति । अन्वयो नाम यत्सत्त्वे यत्सत्वमित्यभिलप्यः साहचर्यनियमः । यथा धूमसत्त्वे वह्निसत्त्वम् । तद्वान् हेतुरन्वयीत्युच्यते । व्यतिरेको नाम यदभावे यदभाव इत्यभिलप्यः साहचर्यनियमः । यथा वह्न्यभावे धूमाभावः । तद्वान् व्यतिरेकी हेतुः । द्विलक्षणः द्विरूपः । व्याप्तिः पक्षधर्मता चेति द्वयमप्यनुमानाङ्गम् । तत्रोभयोरन्यतरस्य वा विरहे हेतवो दुष्टा भवन्तीति ते हेत्वाभासा इत्यु-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

च्यन्ते । हेतुवदापाततो भासन्त इति हेत्वाभासाः । तानाह—व्यभिचारीति । व्यभिचारोऽनियमः । हेतुसाध्ययोः साहचर्ये योऽयमनियमः स व्यभिचारः । तद्वान् हेतुर्व्यभिचारी । स अनैकान्तिक इत्यप्युच्यते । यथा—पर्वतो धूमवान् वह्नेः इत्यत्र यत्र यत्र वह्निः तत्र तत्र धूम इति नियमो वक्तुं न शक्यते, अयोगोले वह्निमत्यपि धूमादृष्टेः । अतोऽत्र वह्निर्व्यभिचारी हेतुः । विरुद्ध इति । साध्याभावव्याप्तो हेतुविरुद्धः । यथा-शब्दो नित्यः कार्यत्वात् इत्यत्र कार्यत्वरूपो हेतुः साध्याभावेन नित्यत्वाभावेन व्याप्तो भवति । असिद्ध इति । स च त्रिधा—स्वरूपाअसिद्धः, आश्रयासिद्धः, व्याप्यत्वासिद्धश्चेति । तत्र प्रथमो यथा—जीवोऽनित्यः, चाक्षुषत्वात् घटवत् इति । अत्र जीवे पक्षे चाक्षुषत्वं स्वरूपतोऽसिद्धमिति नानुमानं प्रभवति । द्वितीयो यथा—गगनारविन्दं सुरभि, अरविन्दत्वात् इत्यत्र आश्रयभूतं गगनारविन्दमप्रसिद्धम् । सोपाधिकस्तृतीयः । यथा यज्ञियपशुहिंसा अधर्मावहा, हिंसात्वात् इत्यत्र निषिद्धत्वमुपाधिः । तद्विशिष्टत्वादयं व्याप्यत्वासिद्धो हेतुः । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः । सत्प्रतिपक्षकः; सन् प्रतिपक्षः साध्याभावसाधको हेतुर्यस्य स सत्प्रतिपक्षकः । अयं प्रकरणसम इत्यप्युच्यते । यथा शब्दो नित्यः, श्रावणत्वात् इत्युक्ते, शब्दोऽनित्यः कार्यत्वादित्यनित्यत्वरूपस्य साध्याभावस्य साधको हेतुः कार्यत्वमिति ॥ ५ ॥

बाधित्त इति । अयमेव कालात्ययपदिष्ट इत्यप्युच्यते । साध्याभाववत्पक्षको हेतुर्बाधितः । यथा वह्निरनुष्णः पदार्थत्वात् जलवदिति । अत्र वह्नौ अनुष्णत्वं नास्ति । एते पञ्चापि हेत्वाभासाः हेतुवदापाततो भासन्ते । निष्कर्षे तु न हेतव इत्यर्थः । तस्मात् ते न साध्यस्य साधकाः । अनुमानस्य स्वार्थपरार्थत्वभेदेन द्वैविध्यमभिप्रेत्य पूर्वोक्तः प्रपञ्चः स्वार्थानुमानस्येत्याह—एवमिति । स्वस्य निष्कर्षार्थं प्रवृत्तं स्वार्थम् । परबोधनार्थं प्रवृत्तं परार्थम् ॥ ६ ॥

किंच हेतु दो प्रकार का होता है- अन्वयी और व्यतिरेकी । व्यभिचारी, विरुद्ध, असिद्ध, सत्प्रतिपक्षक और बाधित- ये पांच **हेत्वाभास** हैं जो साध्य के साधक नहीं हैं । इस प्रकार **स्वार्थानुमान** विस्तारपूर्वक कहा गया है ॥५-६ ॥

**न्यायजन्यः परामर्शः परार्थानुमितेः कृते ।**
**न्यायोऽवयववाक्यानि प्रतिज्ञादीनि पञ्च तु[१] ॥ ७ ॥**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

परार्थानुमाने विशेषमाह—न्यायेति। वक्ष्यमाणं प्रतिज्ञादिपञ्चकं न्यायः। तज्जन्यः परामर्शः परार्थानुमितिं जनयति। न्यायावयवानाह—प्रतिज्ञादीति। प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनमिति पञ्चावयवाः ॥ ७ ॥

**परार्थानुमान के लिए न्यायजन्य परामर्श होता है। प्रतिज्ञा, हेतु, उदाहरण, उपनय और नियमन- ये पञ्चावयव वाक्य न्याय कहे जाते हैं ॥७ ॥**

**प्रतिज्ञा साध्यनिर्देशो हेतुस्तद्वचनं मतम्।**
**व्याप्त्युक्तिपूर्वदृष्टान्तवागुदाहरणं भवेत् ॥ ८ ॥**

तत्र प्रतिज्ञा नाम साध्यनिर्देशः; यथा वह्निमानिति। हेतुर्नाम हेतूक्तिः; यथा धूमादिति। उदाहरणं नाम व्याप्तिनिर्देशपूर्वकं दृष्टान्तस्य वचनम्; यथा यो यो धूमवान् स सोऽग्निमान् यथा महानस इति ॥ ८ ॥

**प्रतिज्ञा साध्यनिर्देश है, यथा- वह्निमान्; हेतु हेतूक्ति है, यथा- धूमात्; उदाहरण व्याप्तिनिर्देशपूर्वक दृष्टान्तवचन होता है, यथा- यो यो धूमवान् स सोऽग्निमान् यथा महानसः ॥८ ॥**

**व्याप्यस्य पक्षवृत्तित्वबोधश्चोपनयो मतः[२]।**
**उपसंहारवचनं भवेन्निगमनं पुनः ॥ ९ ॥**

व्याप्यस्य हेतोः पक्षे पर्वतादौ वर्तमानत्वबोधनमुपनयः। यथा—तथा चायं धूमवानिति। पक्षे साध्यस्योपसंहारवचनं निगमनम्। यथा—तस्मादग्निमानिति। इदं च पञ्चावयववाक्योपन्यसनं नैयायिकरीत्या। वेदान्तसिद्धान्तरीत्या तु नैवावयवसंख्यानियमः। मृदुमध्यमोत्तमधियां संग्रहविस्ताराभ्यां यावदपेक्षं प्रयोग इति भाव्यम् ॥ ९ ॥

**व्याप्य हेतु का पक्ष में रहने का बोध उपनय कहलाता है, यथा- तथा चायं धूमवान्। पक्ष में साध्य का उपसंहारवचन निगमन कहा जाता है, यथा- तस्मादग्निमान् ॥९ ॥**

**इति वेदान्तकारिकावल्यामनुमाननिरूपणं द्वितीयं प्रकरणम्।**

---

२. पञ्च चं—C

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ३. शब्दनिरूपणम्

अनाप्तानुक्तवाक्यं यत्तच्छाब्दकरणं स्मृतम् ।
वेदस्यापौरुषेयत्वात्तत्र लक्षणसंगतिः ॥ १ ॥

अनाप्तेत्यादि । अनाप्तैरयथार्थभाषिभिरनुक्तं यद्वाक्यं तच्छाब्दप्रमितेः करणम्; शब्दप्रमाणमित्यर्थः । आप्तोक्तवाक्यमित्युक्तौ वेदस्यापौरुषेयस्यासंग्रहः स्यादिति नञ्द्वयघटितं लक्षणमुक्तम् । तदेवाह—वेदस्येति । ईश्वरोऽपि वेदस्य प्रवर्तयितैव; नोत्पादक इति भावः ॥ १ ॥

जो वाक्य अनाप्त द्वारा अनुक्त होता है वह शाब्द प्रमिति का करण कहलाता है । कारण कि वेद अपौरुषेय हैं, यही वेद का लक्षण है ॥१ ॥

सिद्धे[1] व्युत्पत्तिसद्भावाद्वेदो निष्पन्नबोधकः ।
तत्कार्यपरताहानेरप्रामाण्यं न शङ्क्यताम् ॥ २ ॥

ननु मीमांसकैः शब्दस्य कार्यपरतयैव प्रामाण्याङ्गीकारात् सिद्धब्रह्मावबोधकानां वेदान्तवाक्यानां कथं प्रामाण्यमित्याशङ्क्याह—सिद्ध इति । सद्भावादिति । अम्बा तात इत्याद्यङ्गुलिनिर्देशपूर्वकं बालानां व्युत्पत्तिसंभवात् कार्यपरत्वनियमो नास्तीत्यर्थः । एतद्विस्तरश्च श्रीभाष्यादावनुसंधेयः । निष्पन्नम्; सिद्धं ब्रह्म । तत्; तस्मात् । कार्यपरताहानेः; वेदान्तवाक्यानामिति शेषः । । २ ॥

वेद सिद्ध ब्रह्म के बोधक हैं, क्योंकि शब्द सिद्ध वस्तु के ही व्युत्पत्तिपरक होते हैं । अतएव वेदान्त-वाक्यों के प्रामाण्य में इसलिए शङ्का नहीं करनी चाहिए कि शब्द मात्र साध्य वस्तु के ही व्युत्पत्तिपरक होते हैं, क्योंकि ऐसा नहीं है ॥२ ॥

कर्मब्रह्माभिधायित्वात्स च भागद्वयात्मकः ।
पूर्वभागः कर्मपर उत्तरो ब्रह्मगोचरः ॥ ३ ॥

---

१. सिद्धत्युत्पत्ति-C

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेदस्य भागद्वयात्मकतां तावदाह—कर्मेत्यादि । कर्मकाण्डब्रह्मकाण्डभेदेन द्वेधा विभाग इत्यर्थः । तत्र पूर्वभागः कर्मपरः । उत्तरभागो ब्रह्मपर इति विवेकः ॥३ ॥

वेद के दो भाग हैं- कर्मकाण्ड और ब्रह्मकाण्ड । इसमें पूर्वभाग कर्मपरक है तथा उत्तरभाग ब्रह्मपरक है ॥३ ॥

**तदैक्यात्पूर्वपरयोर्व्याख्ययोरेकशास्त्रता[1] ।**
**अध्यायभेदवद्भेदे[2] शास्त्रैक्यं न विरुध्यते ॥ ४ ॥**

तदैक्यात्; भागद्वयात्मकस्य वेदस्यैक्यात् । व्याख्ययोः; वेदार्थविचार परयोः कर्मब्रह्ममीमांसयोः । एकशास्त्रता; मीमांसारूपैकशास्त्रता । अत्र तदैक्यादिति हेतुनिर्देशः । व्याख्येयस्य वेदस्यैक्यात् व्याख्यानरूपयोः पूर्वोत्तरमीमांसयोरैक्यमित्यर्थः । यथा शारीरकचतुर्लक्षण्यां समन्वयाविरोधसाधनफलरूपावान्तरविषयभेदेऽपि ब्रह्ममीमांसारूपत्वात् विशिष्टमेकं शास्त्रमिति तद्भाष्यस्याप्येकशास्त्रत्वं तद्वदिति भावः ।

अत्रेदमवधेयम्—अथातो ब्रह्मजिज्ञासेत्यत्राथशब्दः कर्मविचारानन्तर्यपरः । अथ कर्मविचारानन्तरम्, अतः कर्मविचारस्य वृत्तत्वाद्धेतोः, ब्रह्मजिज्ञासोदेतीति सूत्रार्थः । अध्ययनविधिर्हि साङ्गसशिरस्कवेदाध्ययनविषयः । निर्वृत्ते च तथाविधेऽध्ययने रागतो विधितो वा पुरुषः कृत्स्नवेदार्थविचारे प्रवर्तमानोऽधीतक्रमेण प्रथमं कर्मविचारे प्रवर्तते । ततो विचारितानां कर्मणामल्पास्थिरफलत्वमवगम्यानल्पस्थिरफलब्रह्मविचारे प्रवर्तते इति वेदार्थविचाररूपाया मीमांसाया एकाधिकारिकत्वादेकशास्त्रत्वमेव प्रामाणिकमिति सिद्धान्तः । तथाचाह श्रुतप्रकाशिकाकारः— "अथातः शब्दोपस्थापितोऽधिकारिविशेषः प्रदर्शितो भवति । समधिगतकर्मा सांसारिकफलनिर्विण्णोऽन्तस्थिरफलाकाङ्क्षी हि शास्त्रमधिकरोति" इति । न चैवं शारीरकस्य विरक्ताधिकारिकत्वे स्वर्गादिसाधन- काम्यानुष्ठाता न कश्चित्स्यादित्यननुष्ठानलक्षणमप्रामाण्यं पूर्वकाण्डस्य स्यादिति चेत्, मैवम्, मोहात् विघ्नसंचयाच्च ये कर्ममात्रं विचार्य विश्रान्ताः, ये च ख्यात्यादिकामाः, ते

---

१. व्याख्येया ह्येकशास्त्रता—C.
२. वेदे—C

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रुतशारीरका अपि प्रवृत्तिधर्मं न जह्युरिति तस्य सार्थक्यसंभवात्। एवं स्थितेऽत्राथशब्दस्य साधनचतुष्टयसंपत्त्यानन्तर्यार्थकत्वं श्रीशंकराचार्यैरुपवर्णितमवलम्ब्य सर्वज्ञात्मना संक्षेपशारीरके कर्मब्रह्ममीमांसयोर्भिन्नफलकत्वाद्भिन्नाधिकारिकत्वं शास्त्रभेदे बीजमुपक्षिप्तम्। तच्च तदनुगामिभिः क्रमेण युक्तिजालसलिलसेकेन परिवर्धितम्। तत्र युक्तश्चैवमुपपादिताः—तत्त्वज्ञानस्यैव मोक्षसाधनत्वात् कर्मणां तत्र न कथंचिदप्युपयोगः। प्रत्युत कर्मज्ञानयोर्विरोधोऽपि। कर्मणि हि आविद्यकपुरुषाधिकृतानि। तत्त्वज्ञानं त्वविद्योच्छेदकामाधिकृतमिति कर्मज्ञानयोरालोकतमसोरिव परस्परं विरोधात् तयोर्न कथंचित्समसमुच्चयोऽङ्गाङ्गिभावसमुच्चयो वा संभवति। अतस्तत्प्रतिपादिके उभे अपि मीमांसे नैकस्य शास्त्रस्य शाखाभूयमर्हतः। किंतु पृथक्शास्त्रे इति। तन्निराकरोति—तदैक्यादिति। कर्मज्ञानयोःसमसमुच्चयासंभवेऽप्यङ्गाङ्गिभावेन समुच्चयः संभवत्येव। अनभिसंहितफलविशेषतया क्रियमाणैर्हि कर्मभिः ज्ञानोत्पत्तिविरोधिपापनिर्हरणात्कर्माणि ज्ञानस्येतिकर्तव्यतामापद्यन्ते। अतो भगवदाराधनरूपकर्मप्रतिपादनपरः पूर्वकाण्डः। उत्तरकाण्डस्तु सर्वकर्मसमाराध्यभगवत्प्रतिपादनपर इति कुतस्तयोर्विरोधः। कुतस्तरां च तद्विचारपरयोर्मीमांसयोर्विरोध इति नैकशास्त्रत्वव्याघातः। पूर्वोत्तरमीमांसारूपो व्यवहारोऽप्यत्रानुकूल इति वदन्ति। उत्तर मीमांसाया अथातः शब्दपुरस्कारेण प्रतिज्ञान्तरेण चारम्भात् शास्त्रभेदः सूत्रकृत्संमत इत्यत्राह—अध्यायेति। यद्यथातः शब्दश्रवणमात्रेण प्रतिज्ञान्तरेण च शास्त्रभेदः, तदा "अथातः शेषलक्षणम्" "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इत्यादावपि शास्त्रभेदः स्यादिति प्रतिबन्द्यभिप्रेता ॥ ४ ॥

क्योंकि सम्पूर्ण वेद अपने दो भागों में विभक्त होने पर भी **वेद** अर्थात् एक कहा जाता है, इसलिए उसके व्याख्या-ग्रन्थ भी पूर्व-मीमांसा और उत्तरमीमांसा भेद से दो होने पर भी **एक** अर्थात् मीमांसा-ग्रन्थ ही कहे जाने चाहिए। मीमांसा-शास्त्र के **एक** होने में अध्यायभेद के समान प्रत्येक भाग का विषयभेद कोई विरोध उपस्थित नहीं करता है ॥४॥

**विध्यर्थवादमन्त्रात्मा त्रिविधः स प्रतीयते।**
**अनुष्ठेयार्थगमको मन्त्रः स्यादर्थवादगीः ॥ ५ ॥**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रकारान्तरेण त्रैविध्यमाह—विधीत्यादि । विधिः, अर्थवादः, मन्त्र इति त्रिधा विभाग इत्यर्थः । तेषां प्रत्येकं लक्षणमाह—अनुष्ठेयेति । अनुष्ठेयार्थप्रकाशको मन्त्र इति मन्त्रलक्षणम् । यथा "इषे त्वा" इत्यादिः ॥ ५ ॥

प्रकारान्तर से वेद के तीन भाग कहे जाते हैं- विधि, अर्थवाद और मन्त्र । अनुष्ठेय अर्थ का प्रकाशक मन्त्र कहलाता है, यथा- 'इषे त्वा' इत्यादि । **अर्थवाद** इस प्रकार है- ॥५ ॥

**प्रवृत्त्युत्तम्भिका या स्याद्विधिर्वाक्यं प्रवर्तकम् ।**
**स त्रिधापूर्वनियमपरिसंख्याविभेदतः ॥ ६ ॥**

अर्थवादो नाम पुरुषप्रवृत्तिनिवृत्त्युत्तम्भकं वचनम् । यथा—"वायुर्वैक्षेपिष्ठा देवता" इति वचनं वायव्येष्टौ पुरुषप्रवृत्तिमुत्तम्भयति । "सोऽरोदीत्" इत्यादिकं रजतदानादौ पुरुषनिवृत्तिमुत्तम्भयति । पुरुषस्य कर्मणि प्रवर्तकं वाक्यं विधिः । स त्रिधा—अपूर्वविधिः, नियमविधिः, परिसंख्याविधिश्चेति । "यजेत स्वर्गकामः" इत्यपूर्वविधिः । "व्रीहीनवहन्ति" इति नियमविधिः । "पञ्च पञ्चनखा भक्ष्याः" इति परिसंख्याविधिः । तेषां लक्षणं तु—

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥"

इति ॥ ६ ॥

पुरुष की प्रवृत्ति या निवृत्ति में उत्तम्भक= प्रेरक वचन **अर्थवाद** कहे जाते हैं, यथा- वायुर्वै क्षेपिष्ठा देवता । पुरुष के कर्म में प्रवर्तक वाक्य **विधि** कहा जाता है । विधि के तीन प्रकार हैं- (i) अपूर्वविधि, यथा- 'यजेत स्वर्गकामः'; (ii) नियम विधि, यथा- 'व्रीहीनवहन्ति'; तथा (iii) परिसंख्या विधि, यथा- 'पञ्च पञ्चनखा भक्ष्याः' ॥६ ॥

**[1]नित्या नैमित्तिकाः काम्या इति ते बहुधा मताः ।**
**[2]तेषां स्वरूपलक्ष्माणि मन्तव्यानि नयान्तरे ॥ ७ ॥**

---

१. नित्यनैमित्तिके काम्यादिकास्ते—A.C.
२. तल्लक्षणस्वरूपाणि द्रष्टव्यानि—C.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रकारान्तरेणापि विभागमाह—नित्या इति । "अहरहः संध्यामुपासीत" इति नित्यविधिः । "उपरागे स्नायात्" इति नैमित्तिकविधिः । "ज्योतिष्टोमेन स्वर्गकामः" इत्यादिः काम्यविधिरिति ज्ञेयम् । एतेषां विस्तरेण स्वरूपलक्षणादीनि शास्त्रान्तरेषु ज्ञातव्यानि । विस्तरभियात्र न विस्तृतानीत्याह—तेषामिति ॥ ७ ॥

प्रकारान्तर से नित्य, नैमित्तिक, काम्य आदि अनेक भेद विधि के कहे गये हैं। उनके स्वरूप व लक्षण दूसरे आकर ग्रन्थों से ज्ञातव्य हैं ॥७ ॥

**छन्दः कल्पश्च शिक्षा च निरुक्तं ज्यौतिषं तथा ।**
**व्याकृतिश्चेति वेदस्य षडङ्गानि प्रचक्षते ॥ ८ ॥**

वेदाङ्गान्याह—छन्द इत्यादि ।

"शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा ।
कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ॥"

इत्यस्यार्थतोऽनुवादोऽयम् ॥ ८ ॥

वेद के छः अङ्ग कहे गये हैं- छन्द, कल्प, शिक्षा, निरुक्त, ज्यौतिष तथा व्याकृति ॥८ ॥

**अनुष्टुबादिकं छन्दः कल्पः श्रौतादिबोधकः ।**
**वर्णनिर्णायिका शिक्षा निरुक्तं स्वार्थबोधकम् ॥ ९ ॥**

**अनुष्ठानादिकालस्य निर्णये ज्यौतिषं भवेत् ।**
**सौशब्द्याय व्याकरणमिति साङ्गे प्रमाणता ॥ १० ॥**

षण्णामङ्गानां प्रत्येकं स्वरूपं संगृह्याह—अनुष्टुबादिकमिति । स्वार्थबोधकम्; वैदिकपदार्थबोधकम् । कालस्येति; "वसन्ते वसन्ते यजेत" इत्याद्युक्तवसन्तादिकालस्येत्यर्थः । साङ्गे; षडङ्गसहिते वेदे ॥ ९-१० ॥

अनुष्टुप् आदि छन्द हैं, श्रौत आदि के बोधक कल्प हैं, वर्णों की निर्णायिका शिक्षा है, वैदिक शब्दों का अर्थबोधक निरुक्त है, अनुष्ठान आदि के काल-निर्णय हेतु ज्यौतिष होता है, तथा व्याकरण शब्द के

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सुष्ठु-प्रयोग के लिए है । इस प्रकार वेद अपने छः वेदाङ्ग सहित प्रमाण स्वरूप हैं ॥ ९-१० ॥

**एतन्मूलतया स्मृत्यादीनां प्रामाण्यमीरितम् ।**
**एतद्विरुद्धं यत्किंचिन्नाश्नुवीत प्रमाणताम् ॥ ११ ॥**

एतन्मूलतया; वेदमूलतया । स्मृत्यादीनामिति; आचारादिकमादिपदार्थः । एतद्विरुद्धम्; वेदविरुद्धम्; यथा चैत्यवन्दनादिबोधिका बाह्यानां स्मृतिः । नाश्नुवीत; न लभेत ॥ ११ ॥

मूल में वेद रहने से स्मृति आदि भी प्रामाणिक कही जाती हैं । वेद विरुद्ध यत्किंचित् यथा- चैत्यवन्दनादि बोधिका स्मृति प्रामाणिक नहीं मानी जाती है ॥११ ॥

**आकाङ्क्षादिकमेतच्च शाब्दबोधैककारणम् ।**
**तद्विचारोऽत्र संक्षिप्तो ग्रन्थविस्तरभीरुणा ॥ १२ ॥**

आकाङ्क्षादिकमिति । योग्यतासंनिध्यादिरादिपदार्थः । शाब्दबोधेति; शब्देन शाब्दप्रमितौ जनयितव्यायामाकाङ्क्षायोग्यतासंनिध्यादयः सहकारिण इत्यर्थः । ते च ग्रन्थविस्तरभयादत्र न विवृताः ॥ १२ ॥

आकांक्षा, योग्यता और सन्निधि- ये तीनों शाब्दबोध के कारण होते हैं । यहाँ इनका ग्रन्थविस्तार के भय से विचार नहीं किया जा रहा है ॥१२ ॥

**मुख्यौपचारिकत्वाभ्यां स शब्दो द्विविधो मतः ।**
**अभिधा मुख्यवृत्तिः स्याद् वृत्तिरन्यौपचारिकी ॥१३ ॥**

शब्दस्य प्रभेदमाह—मुख्येति । मुख्य औपचारिकश्चेति शब्दो द्विधा । तत्राभिधावृत्त्या बोधको मुख्यः; यथा—घटशब्दः कलशबोधकः । तदन्यया गौण्यादिकया बोधक औपचारिकः; यथा—पुरुषोत्तमे मुख्यवृत्तस्य भगवच्छब्दस्यान्यत्र देवतान्तरादौ तद्गुणलेशयोगात् प्रवृत्तिः ॥ १३ ॥

शब्द दो प्रकार के होते हैं- मुख्य और औपचारिक । इनमें अभिधावृत्ति से बोधक मुख्य कहलाते हैं तथा गौणी आदि वृत्ति से बोधक

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

औपचारिक कहे जाते हैं। अभिधा मुख्यवृत्ति है तथा अन्य वृत्ति औपचारिकी कही जाती है ॥१३॥

**शरीरवाचकाः शब्दाः शरीरिकृतवृत्तयः ।**
**सर्वशब्दैकवाच्यत्वं हरेरिति गदिष्यते ॥ १४ ॥**

अस्मिन् प्रसङ्गे विशिष्टाद्वैतप्रधानप्रतितन्त्रसिद्धान्तमपि प्रकटयति—शरीरवाचका इति। लोके हि शरीरवाचकाः शब्दाः शरीरिपर्यन्तमर्थं बोधयन्ति। तथाहि—देवत्वमनुष्यत्वपुंस्त्वस्त्रीत्वादयो न जीवधर्माः, अपितु शरीरधर्मा इति सर्वसंप्रतिपन्नम्। तथापि 'देवो वन्द्यः' इत्यादौ देवादिशब्दा न शरीरमात्रबोधनेन विरतव्यापारा भवन्ति। किंतु तच्छरीरात्मनि पर्यवस्यन्ति। तत्र च निदानं देवादिशरीराणामात्मानं प्रत्यपृथक्सिद्धविशेषणत्वमेव। किं चाकृत्यधिकरणन्यायेन गवादिशब्दा गोत्वे शक्ता इत्यपि निर्विवादम्। तथापि ते गवादिव्यक्तिबोधका इत्यपि सर्वसंप्रतिपन्नम्। तत्रापि जातिव्यक्त्योरपृथक्सिद्धः संबन्ध एव निदानम्। अपिच शुक्लादयः शब्दा रूपवाचका अपि शुक्लः पट इत्यादौ गुणिसमानाधिकरण्येन प्रयुज्यमाना गुणिपरा इत्यपि सर्वसंप्रतिपन्नम्। तत्रापि गुणगुणिनोरपृथक्संबन्ध एव निदानम्। एवमत्रापि भगवतोऽपृथक्सिद्धविशेषणभूतचिदचिद्वाचकाः सर्वे शब्दाः प्रकारिणि भगवतोऽपृथक्सिद्ध विशेषणभूतचिदचिद्वाचकाः सर्वे शब्दाः प्रकारिणि भगवति मुख्यैव वृत्त्या बोधका इति। एवं च भगवतः सर्वशब्दवाच्यत्वं सिद्धम्। अत एव "सर्वे वेदा यत्पदमामनन्ति" "स ब्रह्मा स शिवः सेन्द्रः" "तदेवाग्निस्तद्वायुः" "ज्योतीषिं विष्णुर्भुवनानि विष्णुः" इतिच श्रुतिस्मृतीतिहासेषु गीयत इत्यवगन्तव्यम्। गदिष्यत इति; ईश्वरनिरूपणावसर इति भावः ॥ १४ ॥

शरीरवाचक शब्द शरीरी के ही द्योतक होते हैं, अतएव सभी शब्द भगवान् हरि के ही वाचक हैं- यह आगे कहा जायेगा ॥१४॥

इति वेदान्तकारकावल्यां शब्दनिरूपणं तृतीयं प्रकरणम्।
प्रमाणनिरूपणं समाप्तम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ४. प्रकृतिनिरूपणम्

**यत् प्रमाविषयं तत् स्यात्प्रमेयमिति तद् द्विधा।**
**द्रव्यमद्रव्यमित्याद्यं तदुपादानकारणम्॥ १॥**

प्रमाणनिरूपणानन्तरं प्रमेयनिरूपणमारभते—यदिति। प्रमाविषयमिति। अत्र च द्वेधा व्याख्या—प्रशब्दस्य प्रथमं माशब्देनान्वये प्रकृष्टा मा प्रमा यथार्थज्ञानम्, तस्या विषय इत्येका। मायाः विषयः माविषयः, मेयमित्यर्थः। प्रकृष्टं मेयं प्रमेयमित्यन्या। प्रथमपक्षे प्रकर्षः संशयविपर्ययादिभिन्नत्वम्। द्वितीये संशयविपर्ययाद्यविषयत्वमिति भिदा। तत्; प्रमेयम्। द्विधा; द्विप्रकारा। प्रकारद्वयमेवाह—द्रव्यमिति। आद्यं तदिति; द्रव्यरूपं प्रमेयमित्यर्थः। उपादानेति; उपादानकारणत्वं द्रव्यत्वमिति द्रव्यलक्षणम्॥ १॥

प्रमा का जो विषय होता है वह **प्रमेय** कहलाता है। प्रमेय के दो भेद हैं-द्रव्य और अद्रव्य। **द्रव्य** वह है जो उपादान कारण होता है॥१॥

**अवस्थान्तरयोगित्वमुपादानत्वमुच्यते।**
**[1]गुणाश्रयं वा द्रव्यं स्यात्तच्च द्वेधा प्रकीर्तितम्॥ २॥**

समवायिकारणमुपादानम्। यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति च नैयायिकाः परिभाषन्ते। वेदान्तिनां मते समवायानङ्गीकारात् तद्घटितं लक्षणमुपेक्ष्यान्यथा लक्षयति—अवस्थेति। अन्या अवस्था अवस्थान्तरम्, तद्योगित्वं तदाश्रयत्वमित्यर्थः। अवस्था नाम आगन्तुकोऽपृथक्सिद्धश्च धर्मः। कार्यकारणयोरनन्यत्वात् मृदेव कम्बुग्रीवादिमत्त्वरूपागन्तुकधर्मिणी घट इत्युच्यत इति मृदुपादानं भवति। लक्षणान्तरमाह—गुणेति। पदार्थसामान्यस्य द्रव्याद्रव्यात्मना विभागस्याभिहितत्वात् अत्र गुणपदेनाद्रव्यमुच्यते। घटादीनां रूपाद्याश्रयत्वात् लक्षणसंगतिः। एवं द्रव्याद्रव्यविभागेन तल्लक्षणकथनेन च निर्धर्मका निराधारा रूपादय एव पदार्था इति वैभाषिकणां मतमसंगतमिति द्योतितम्। 'रूपी घटः' इति ह्यनुभवो जायते, नतु 'रूपं घटः' इति। 'घटः रूपादिभिन्नः अवस्थाश्रयत्वात्, यन्नैवं

---

१. द्रव्याश्रयं त्वद्रव्यं स्यात्—B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तन्नैवं यथा रूपम्' इत्याद्यनुमानं चात्र बोध्यम् । द्रव्यं विभजते—तच्चेति । द्वेधेति; जडाजडात्मनेत्यर्थः ॥ २ ॥

उपादान कारण वह है जो अवस्थान्तर में परिणत होता है । अथवा, द्रव्य वह है जो गुणों के आश्रित रहता है । द्रव्य के दो भेद कहे गये हैं- जड और अजड ॥२ ॥

अमिश्रसत्त्वराहित्यं जडत्वमनुगद्यते ।
जडं प्रकृतिकालौ द्वौ सा[१] सत्त्वादिगुणत्रया[२] ॥ ३ ॥

तत्र जडलक्षणमाह—अमिश्रेति । रजस्तमोभ्यामित्यादिः । रजस्तमोभ्याममिश्रितं यत् सत्त्वं सत्त्वगुणः, तद्रहितमित्यर्थः । मिश्रसत्त्ववत्त्वमिति तु लक्षणं न वक्तुं शक्यते, जडभेदे काले अव्याप्तेः कालो हि सिद्धान्ते गुणत्रयरहितो नित्यश्च । अत एव तस्याप्राकृतनित्यविभूतावपि सद्भाव उपपद्यते । अत एव—"कालं स पचते तत्र न कालस्तत्र वै प्रभुः" इत्यादिकं संगच्छते । पूर्वं प्रत्यक्षनिरूपणे प्रकृतिः काल इति जडस्य द्वैविध्ये उक्तेऽपि प्रकृतौ विशेषं वक्तुं पूर्वोक्तमनुभाषते—जडमिति । सेति; प्रकृतिरित्यर्थः । सत्त्वादिगुणत्रयेति; सत्त्वादिगुणानां त्रयं यस्यामिति बहुव्रीहिः । सत्त्वादिगुणाश्रयेति पाठस्तु तल्लक्षणस्य शुद्धसत्त्वाश्रये नित्यविभूतावतिव्याप्तेर्नादर्तव्यः ॥ ३ ॥

जड वह कहलाता है जो अमिश्र सत्त्व-गुण से रहित होता है । जड के दो भेद हैं- प्रकृति और काल । प्रकृति वह है जो सत्त्व, रजस् और तमस्- इन तीन गुणों से युक्त होतीं है ॥३ ॥

प्रकृतिः सा क्षराविद्यामायाशब्दैर्निगद्यते ।
कार्योन्मुखत्वावस्था स्यादव्यक्तव्यपदेशभाक्[३] ॥४ ॥

प्रकृतिरिति; पूर्वकारिकोक्तस्य लक्षणस्य लक्ष्यनिर्देशः । प्रकरोति विकारानस्या ईश्वर इति प्रकृतिः । अपादाने क्तिन् प्रत्ययः । सेति प्रकृतेरेव विशेषाभि-

---

१. स्तः—B.
२. गुणाश्रया—C.
३. देशनात्—B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

धानार्थं पुनर्निर्देशः । क्षरेत्यादि । प्रकृतेरेव क्षरेति अविद्येति मायेति च नामान्तरैस्तत्र तत्र व्यपदेशः क्रियत इत्यर्थः । क्षरति विकरोतीति क्षरम्, "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" इति श्रुतेः । "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इति स्मृतेश्च । महदहंकारादिरूपेण विकारित्वादिदं नाम । न विद्येत्यविद्या । नञत्र विरोधे । विद्याविरोधित्वादविद्येत्युच्यते, "क्षरं त्वविद्या ह्यमृतं तु विद्या" इत्यादिश्रुतेः । विचित्रसृष्ट्युपकरणत्वात् मायेत्युच्यते । मायाशब्दस्य हि विचित्रकार्यकरत्वं प्रवृत्तिनिमित्तम्,

"तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमैकैकश्येन सूदितम् ॥"

इत्यादौ तथा प्रयोगात् । "मायां तु प्रकृतिं विद्यात्" इति श्रुतिश्च प्रकृतिपर्यायं मायाशब्दमाह । इदं चाचेतनाप्रधानादिनाम्नामप्युपलक्षणम्, "अचेतना परार्था च नित्या सततविक्रिया" "प्रधानपुंसोरजयोः" इत्यादिवचनात् । सैव प्रकृतिर्दशान्तरापन्ना अव्यक्तेत्युच्यत इत्याह—कार्येति । सा प्रकृतिर्यदा महत्त्वाद्यवस्थान्तरहेतुभूतं शक्तिविशेषमवलम्बते तदा अव्यक्तमित्युच्यते । इदमुपलक्षणम्—ततः पूर्वतनावस्थान्तराणामपि । तथाहि—मूलप्रकृतेर्महत्त्वहेतुभूतावस्था अव्यक्तावस्थेत्युच्यते । ततः पूर्वं तिस्रोऽवस्थाः सन्ति । तत्र प्रथमा अविभक्ततमोऽवस्था, यस्यां सा केदारनिक्षिप्तबीजवत् विकारौन्मुख्यरहिता पानकविलीनगुडवत् परमात्मनैकीभावमापन्ना तच्छरीरतयापि चिन्तयितुमशक्या परमात्मैकवेद्या सूक्ष्मावतिष्ठते । ततो द्वितीया विभक्ततमोऽवस्था, यत्र सा मृन्निःसृतबीजवत् अक्षरावस्थाप्राप्त्युन्मुखी भवति ।अस्मिन्नवस्थाद्वये तस्यां सदपि चिद्गर्भत्वं न स्फुरति । ततस्तृतीया अक्षरावस्था,यत्र सा सलिलसंसृष्टार्द्रशिथिलावयवबीजतुल्यावस्था मनाक् स्फुरितचिद्गर्भा च वर्तते । अक्षराख्यचिद्गर्भत्वस्येषत्स्फुरणात् तदा सा अक्षरेति व्यपदेशं लभते । ततस्तुरीया पूर्वोक्ता अव्यक्तावस्था, यत्र सा उच्छूनबीजवदङ्कुरस्थानीयमहदुत्पादनोन्मुखी भवति । एवं चतस्रोऽवस्था व्यतीत्य पञ्चम्यामवस्थायां महदाख्यामापद्यते । एताश्चावस्थाः "अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकी भवति" इति सुबालोपनिषदि प्रतिपादिताः ॥४ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वह प्रकृति क्षर, अविद्या और माया शब्दों से भी जानी जाती है। यह प्रकृति अव्यक्त भी कहलाती है जब यह कार्योन्मुख अवस्था अथवा व्यक्तावस्था को प्राप्त होती है ॥४॥

अव्यक्तान्महदुत्पत्तिः सात्त्विकत्वादिभेदतः।
अहंकारस्ततस्त्रेधा सात्त्विकत्वादिभेदभाक् ॥ ५ ॥

महदादिसृष्टिमाह—अव्यक्तादिति। कार्योन्मुख्यविशिष्टाया मूलप्रकृतेरेव महदादिकारणत्वम्; न तु नैयायिकाभिमतपरमाणूनामित्यर्थः। अनुमानेन परमाणुसाधने तु तस्य लाघवात् त्रसरेणावेव विश्रान्तिरस्तु। यदाहुः—"अनुमितिविषये लाघवस्यानुसारात्" इति। अतश्च प्रकृतिविकारो महानिति सिद्धम्। सांख्यास्तु—महान्तमेव बुद्धिपदेन व्यवहरन्तोऽध्यवसायमेव बुद्धिमाचक्षते। तत्तु अध्यवसायस्यात्मधर्मत्वान्न संगतम्। यदि तु 'आयुर्घृतम्' इति वदध्यवसायहेतुत्वात् महत्यध्यवसायव्यवहार इत्युच्यते, तदा तस्य नाध्यवसायरूपत्वमित्यायातम्। महतस्त्रैविध्यमाह—सात्त्विकत्वेति। सात्त्विकराजसतामसभेदेन त्रिविधो महानित्यर्थः। महतस्त्रैगुण्येऽपि तत्तद्गुणप्राचुर्यभेदात् तथा व्यपदेश इति भावः। महतोऽहंकारसृष्टिमाह—अहंकार इति। ततः; महत इत्यर्थः। अहंकारस्यापि त्रैविध्यमाह—त्रेधेति। सात्त्विकराजसतामसभेदेनाहंकारस्त्रिविध इत्यर्थः। अभिमानोऽहंकार इति सांख्याः। तच्चाभिमानस्यात्मधर्मत्वादसंगतमिति ज्ञेयम्। पूर्ववत् अभिमानहेतुत्वात् अभिमानत्वव्यपदेशो वा भवतु। अस्याहंकारशब्दवाच्यत्वे निदानं तु अनात्मनि देहादावहंभावहेतुत्वम्, न तु परेषामिवाहमर्थत्वम्। सर्वत्राहमर्थो हि प्रत्यगात्मा, न तु महद्विकारोऽहंकारः। एवं चाहंकारशब्दे द्वयी व्युत्पत्तिः। एका अहमर्थभिन्ने देहादौ अहमिति प्रतीतिः। अस्यां व्युत्पत्तौ अहंशब्दात् च्विप्रत्ययमुत्पाद्य प्रक्रिया कर्तव्या। अन्या तु च्विप्रत्ययं विना अहमिति प्रतीतिरहंकार इति। तत्राहंकारस्य दोषत्वात् त्याज्यत्ववचनं च्विप्रत्ययान्तव्युत्पन्नाहंकारशब्दार्थमभिप्रेत्य। "अथातोऽहंकारादेशः" इत्यादि तु च्विप्रत्ययरहितव्युत्पन्नाहंकारशब्दार्थमंभिप्रेत्येति विवेकः। जडस्यैवाहंकारस्य ज्ञातृत्वमिति मायावादिनः ॥ ५ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अव्यक्त से **महत्** की उत्पत्ति होती है जो सात्त्विक, राजस और तामस भेद से तीन प्रकार का होता है। महत् से **अहंकार** की उत्पत्ति होती है जो सात्त्विक, राजस और तामस भेद से तीन प्रकार का होता है ॥५ ॥

**वैकारिकस्तैजसश्च भूतादिरिति भेदतः।**
**नामान्तराणि [1]सन्त्येषामहंकारात्मना सताम् ॥ ६ ॥**

त्रिविधानामहंकाराणां नामान्तराण्याह—वैकारिक इत्यादि। सात्त्विकाहंकारस्य वैकारिक इति,राजसाहंकारस्य तैजस इति, तामसाहंकारस्य भूतादिरिति च नाम। अहंकारात्मना सतामेषां वैकारिकादिनामान्तराणि सन्तीत्यन्वयः ॥ ६ ॥

उक्त त्रिविध अहंकार के तीन अन्य नाम भी हैं- वैकारिक, तैजस और भूतादि ॥६ ॥

**तेषु वैकारिकात्[2] सात्त्विकाहंकारादुपकृतात्।**
**एकादशेन्द्रियाणि स्युर्ज्ञानकर्मेन्द्रियात्मना ॥ ७ ॥**

अनन्तरमिन्द्रियाणामुत्पत्तिमाह—तेष्विति। तेषु; त्रिविधेष्वहंकारेषु मध्ये। उपस्कृतात्; तैजसापरनामकराजासाहंकारसहकृतात्। सात्त्विकाहंकारात् वैकारिकापरनामकात् एकादशेन्द्रियाणि स्युरित्यन्वयः। तानि च ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेति द्विधा ॥ ७ ॥

उन अहंकारों में से सात्त्विक अथवा वैकारिक अहंकार से तैजस अथवा राजस अहंकार की सहायता द्वारा पंच ज्ञानेन्द्रिय, पंच कर्मेन्द्रिय और मन- ये ग्यारह इन्द्रियां उद्भूत होती हैं ॥७ ॥

**ज्ञानप्रसरणे शक्तं ज्ञानेन्द्रियमुदाहृतम्।**
**तन्मनः श्रोत्रचक्षुस्त्वग्घ्राणजिह्वात्मना मतम् ॥ ८ ॥**

ज्ञानेन्द्रियं लक्षयति—ज्ञानेति। प्रसरणम्; विकासः। ज्ञानस्य नित्यविभुत्वाङ्गीकारात् ज्ञानजनकत्वं न लक्षणमुक्तम्। सिद्धान्ते ज्ञानस्य संकोचविकासाभ्यु-

---

१. सन्त्येवं C.
२. वैकारिकाः C.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पगमात् तद्विकासहेतुत्वसंभव इति ज्ञेयम् । तद्विभजते—तदिति । तत्रापि बाह्यान्तरविभागे आन्तरं मनः एकं, बाह्यानि तु श्रोत्रादीनि पञ्चेत्याहत्य षडपि ज्ञानेन्द्रियाणीति ज्ञेयम् । सांख्यास्तु—सर्वप्रवृत्तीनां मनः पूर्वकत्वात् मनः कर्मेन्द्रियमपीति मन्यन्ते । यदाहुः—

"बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानि ।
वाक्पाणिपादपायूपस्थं कर्मेन्द्रियं ह्याहुः ॥
उभयात्मकमत्र मनः ॥"

इति; तन्न, तत्रापि मनसो ज्ञानोत्पादनद्वारैव कर्महेतुत्वमिति ज्ञानेन्द्रियत्वमेवायातम् । तच्चैकमेव हृदयदेशवर्ति । कामसंकल्पादयस्तस्यैव वृत्तिभेदाः । यत्तु मायावादिवेदान्तिनो मनस इन्द्रियत्वं नाभ्युपगच्छन्ति, यच्च सांख्याः "त्रिविधमन्तः करणम्" इति वदन्तो मनोबुद्ध्यहंकारभेदेन तस्य त्रैविध्यमाहुः, तत्सर्वमप्रामाणिकमिति हृदयम् ॥८ ॥

जो ज्ञान के प्रसरण = विकास में समर्थ होती हैं वे **ज्ञानेन्द्रियां** कहलाती हैं, जो इस प्रकार हैं- मन, श्रोत्र, चक्षु, त्वचा, घ्राण और जिह्वा ॥८ ॥

**मनः स्मृत्यादिहेतुस्तद्बन्धमोक्षादिकारणम् ।**
**शब्दमात्रग्रहे शक्तमिन्द्रियं श्रोत्रमुच्यते ।। ९ ।।**

मनो निरूपयति—मन इति । स्मृत्यादीति । प्रत्यभिज्ञादिरादिपदार्थः । बन्धेति । यदाह—

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं तथा ॥"

इति । श्रोत्रं लक्षयति—शब्दमात्रेति । मनोवारणाय मात्रपदम् । शक्तमिति स्वरूपयोग्यता विवक्षिता; न तु फलोपधायकत्वमपि । अतोऽन्यासक्तचित्तस्य शब्दाग्रहणेऽपि न दोषः । तच्च मनुष्याणां कर्णशष्कुल्यवच्छिन्नदेशवर्ति । चक्षुःश्रवसां तु नेत्रगोलकवृत्ति । नैयायिकादयस्तु श्रोत्रस्य नाभसत्वमाहुः; तच्च नास्माकमिष्टमिति भावः ॥ ९ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मन स्मृति, प्रत्यभिज्ञा आदि का हेतु होता है तथा वह बन्धन और मोक्ष का भी कारण होता है। जो इन्द्रिय शब्द मात्र को ग्रहण करने में समर्थ होती है वह **श्रोत्र** कही जाती है ॥९ ॥

**रूपमात्रग्राहि चक्षुस्त्वक् स्पर्शग्रहकारणम्।**
**गन्धैकग्राहकं घ्राणं रसनं रसभासकम्॥ १० ॥**

चक्षुर्निरूपयति—रूपमात्रेति। अत्रापि मात्रपदं पूर्ववत्। चक्षुर्नयनगोलकवृत्ति। त्वचं लक्षयति—त्वगिति। अत्रापि स्पर्शमात्रेति मात्रपदं निवेश्य लक्षणं वक्तव्यम्। त्वगिन्द्रियं च कृत्स्नदेहाश्रितम्, तत्र सर्वत्रापि स्पर्शोपलम्भात्। नखदन्तकेशादिषु स्पर्शानुपलम्भस्तु प्राणमान्द्यात्। एवं च सहकारिकारणवैधुर्यप्रयुक्तस्तत्र स्पर्शानुपलम्भ इति ज्ञेयम्। त्वगिन्द्रियं च संयोगेन साक्षाद्वायुतेजोजलपृथिवीग्राहि। स्पर्शं तु तत्संबद्धतया गृह्णातीति विवेकः। गन्धैकेति; गन्धमात्रेत्यर्थः। मात्रशब्दः पूर्ववत्। घ्राणं च प्रायः प्राणिनां नासाग्रवर्ति। गजानां तु नासैव हस्त इति घ्राणपाण्योरेकमेवाधिष्ठानम्। जिह्वां लक्षयति—रसेति। अत्रापि मात्रपदं निवेश्य व्याख्येयम्॥ १० ॥

रूपमात्र को ग्रहण करने वाली इन्द्रिय **चक्षु** होती है, स्पर्श-ग्रहण का कारण **त्वक्**= त्वचा होती है। गन्धमात्र की ग्राहक **घ्राण** इन्द्रिय होती है, रसभासक **रसना** होती है ॥१० ॥

**एषां विषयसंबन्धः संयोगादिः प्रकीर्तितः।**
**उच्चारणादिकर्मैकशक्तं कर्मेन्द्रियं मतम्॥ ११ ॥**

एषामिति; श्रोत्रादीन्द्रियाणामित्यर्थः। विषयेति; शब्दादीत्यर्थः। संयोगादीत्यादिपदेन संयुक्ताश्रयत्वादि गृह्यते। कर्मेन्द्रियाणि लक्षयति—उच्चारणादीति। आदिपदेन संचारादि गृह्यते। कर्मैकिति; कर्ममात्रेत्यर्थः। अनेन मनोव्यावृत्तिः ॥११ ॥

इन ज्ञानेन्द्रियों का विषयों के साथ जो सम्बन्ध होता है वह संयोग आदि होता है। उच्चारण आदि कर्ममात्र में समर्थ **कर्मेन्द्रियां** कहलाती हैं ॥११ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चधा वाक्पाणिपादपायूपस्थप्रभेदतः ।
वर्णोच्चारणहेतुर्वाक् पाणिः शिल्पादिकारणम् ॥१२ ।

कर्मेन्द्रियाणि विभजते—पञ्चधेति; वागिन्द्रियं लक्षयति—वर्णेति । तच्च हृदयादिस्थानाष्टकवर्ति । यदाह—

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ चतालु च ॥"

इति । पाणीन्द्रियमाह—शिल्पादीति; चित्रविलेखनादीत्यर्थः । आदानादिरादिपदार्थः । स च प्रायो मनुष्याणामङ्गुल्यादिवृत्तिः । क्वचिद् गजादौ तु नासावृत्तिः । क्वचित्पादादिवृत्तिश्च ॥१२ ॥

कर्मेन्द्रिय पांच हैं- वाक्, पाणि, पाद, पायु और उपस्थ । वर्णों के उच्चारण हेतु **वाक्** होती है । शिल्पादि का कारण **पाणि** है ॥१२ ॥

संचारकारणं पादः पायुर्मलनिवृत्तिकृत् ।
उपस्थः परमानन्दहेतुः स्त्रीपुंसयोर्मतः ॥ १३ ॥

पादं लक्षयति—संचारेति । स च मनुष्याणां चरणवृत्तिः,पतगादीनां तु पक्षादिवृत्तिः । पायुमाह—मलेति । स च मनुष्यादीनां तत्तदवयववृत्तिः । क्वचिन्मान्धालादीनामास्यदेशवृत्तिः ॥ १३ ॥

संचरण का कारण **पाद** है । **पायु** मलनिवृत्तिकृत् है । स्त्री और पुरुष के बीच परमानन्द की हेतु **उपस्थ** है ॥१३ ॥

राजसाहंक्रियायुक्ततामसाहंकृते पुनः ।
जायते शब्दतन्त्रमात्रादिकं भूतादिकारणम् ॥ १४ ॥

एवमेकादशानामिन्द्रियाणां सात्त्विकाहंकारजत्वं निरूप्य तामसाहंकाराद्भूतोत्पत्तिक्रममाह—राजसेति । अहंक्रिया; अहंकारः । शब्दतन्मात्रादिकमित्यादिपदेन स्पर्शतन्मात्रादिकं गृह्यते । अत्रेदमवधेयम्—तामसाहंकारात् शब्दतन्मात्रमेव साक्षात् जायते । शब्दतन्मात्रादाकाशः । आकाशात् स्पर्शतन्मात्रम् । ततो वायुरित्यादिरीत्या अन्येषां तन्मात्राणां भूतानां चोत्पत्तिरिति । सांख्यास्तु—

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥"

इति वदन्तः पञ्चापि तन्मात्राणि साक्षात्तामसाहंकारादेवोत्पन्नानि । तत्र शब्दतन्मात्रमाकाशारम्भकम् । इतराणि तु तन्मात्राणि पूर्वपूर्वतन्मात्रसहकृतान्युत्तरोत्तरभूतारम्भकाणीति मन्वते । सा च प्रक्रिया, शब्दतन्मात्राकाशाद्यनन्यथासिद्धोपादानक्रमदर्शन्या स्मृत्यादिकया विरुध्यत इत्यनुपादेया । भूतादिकारणम्; भूतानामुपादानकारणमित्यर्थः ॥ १४ ॥

तामस अहंकार से राजस अहंकार के द्वारा पंचमहाभूतादि की कारण शब्दादि तन्मात्राएँ होती हैं ॥१४ ॥

भूतानामेव सूक्ष्मैकपूर्वावस्थाविशेषकृत्[1] ।
द्रव्यं तन्मात्रमित्याहुः पञ्चधा भूतपञ्चभिः ॥ १५ ॥

तन्मात्रसामान्यलक्षणमाह—भूतानामिति । भूतानामव्यवहितपूर्वसूक्ष्मावस्थाविशिष्टं द्रव्यं तन्मात्रमित्यर्थः ॥ १५ ॥

पांच महाभूतों की ही सूक्ष्ममात्र पूर्वावस्थाविशेष तन्मात्र द्रव्य कही जाती है । पंचमहाभूतों के भेद से ये भी पांच हैं ॥१५ ॥

तन्मात्रपञ्चकं शब्दाद्याश्रयत्वेन संमतम् ।
भूतानां स्यादुपादानं शब्दतन्मात्रमादिमम् ॥ १६ ॥

स्पर्शतन्मात्रकं रूपरसतन्मात्रके अपि ।
[2]गन्धतन्मात्रमेतस्यात् खानिलज्योतिरब्भुवः ॥ १७ ॥

प्रत्येकतन्मात्रलक्षणं तु आकाशादिकं भूतपदस्थाने निवेश्योहनीयम् । तानि च तन्मात्राणि पञ्चधा—शब्दतन्मात्रस्पर्शतन्मात्ररूपतन्मात्ररसतन्मात्रगन्धतन्मात्राणीति । भूतपञ्चभिः आकाशवायुतेजोऽबवनिरूपैः पञ्चभिर्भूतैः सह तन्मात्राणि पञ्चेधेति पूर्वेणान्वयः । तन्मात्रलक्षणादिकमुक्त्वा तत्स्वरूपमाह—तन्मात्रेति ।

---

१. विशेषवत् B.
२. गन्धतन्मात्रमेतेभ्यः B.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

शब्दाश्रयत्वेनेति; अनभिव्यक्तविशेषसूक्ष्मरूपशब्दद्याश्रयत्वेनेत्यर्थः । एतेन शब्द-तन्मात्रं स्पर्शतन्मात्रमित्यादिव्यवहारबीजमुक्तम् । तच्च तन्मात्रपञ्चकं तत्तद्भूतानामुपादानं भवति । तत्रादियं शब्दतन्मात्रम् ॥ १६ ॥

तन्मात्राणि नामतो निर्दिशति—स्पर्शेति । भूतानि नामतो निर्दिशति—खेति । पञ्चभूतानीत्युत्तरेणान्वयः ॥ १७ ॥

ये पंच तन्मात्राएँ शब्दादि गुणों की आश्रयरूप हैं तथा पंचमहाभूतों की उपादान कारण हैं । तन्मात्राएँ इस प्रकार हैं- शब्द, स्पर्श, रूप, रस और गन्ध । पांच महाभूत हैं- आकाश, वायु, तेज, जल और पृथिवी ॥१६-१७ ॥

पञ्च भूतानि तन्मात्रस्वरूपं तु निरूप्यते ।
तामसाहंकृतिखयोर्मध्यावस्थायुगादिमम् ॥ १८ ॥

तन्मात्रस्वरूपमिति; शब्दादितन्मात्राणां स्वरूपमुच्यत इत्यर्थः । तामसाहं-काराकाशयोर्या मध्यमावस्था, तद्युक् आदिमं शब्दतन्मात्रमित्यर्थः ॥ १८ ॥

पांच तन्मात्राओं का स्वरूप इस प्रकार है- तामस अहंकार और आकाश की मध्यावस्था से युक्त प्रथम शब्द तन्मात्रा है ॥१८ ॥

शब्दतन्मात्रमस्माच्च वियदुत्पद्यते तथा ।
खमेव सूर्यस्पन्देन दिगिति व्यपदिश्यते ॥ १९ ॥

आकाशोत्पत्तिमाह—अस्माच्च; शब्दतन्मात्राच्च । वियदुत्पद्यत इति; अनेनाकाशस्य नित्यत्वादुत्पत्यादिराहित्यवादिनो नैयायिकाः प्रत्युक्ताः ।प्रत्यक्षश्चायमाकाशः, उन्मीलितेन चक्षुषा गृह्यमाणत्वात् । खमेवेति; आकाश एव सूर्यपरिस्पन्देनोपाधिना प्राच्यदिदिग्व्यवहारभागित्यर्थः । एतेन दिशो द्रव्यान्तरत्व-वादिनो नैयायिकाः प्रत्युक्ताः ॥ १९ ॥

शब्द तन्मात्रा से आकाश उत्पन्न होता है तथा आकाश ही सूर्य के स्पन्दन के कारण दिक् कहा जाता है ॥१९ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्रव्यं तदाकाशवाय्वोर्मध्यावस्थासुसंयुतम्।
स्पर्शतन्मात्रमस्माच्च वायुरुत्पद्यते क्रमात्॥ २०॥

स्पर्शतन्मात्रं लक्षयति—द्रव्यमिति। आकाशादानन्तरं वायोः पूर्वं च या अवस्था, तद्युतं द्रव्यं स्पर्शतन्मात्रमुच्यते। अस्माच्च; स्पर्शतन्मात्रात्। वायुश्च स्पर्शनप्रत्यक्षविषयः॥ २०॥

**स्पर्श** तन्मात्रा आकाश और वायु की मध्यावस्था से संयुक्त होती है तथा इससे क्रमशः वायु उत्पन्न होता है ॥२०॥

मध्यावस्थायुतं वायुतेजसोर्द्रव्यमुच्यते।
रूपतन्मात्रमित्यस्मात्तेज उत्पद्यते क्रमात्॥ २१॥

रूपतन्मात्रं लक्षयति—मध्येति। वायुतेजसोर्मध्यावस्थायुतं द्रव्यं रूपतन्मात्रमित्यर्थः। अस्मात् तेज उत्पद्यते॥ २१॥

**रूप** तन्मात्रा वायु और तेज की मध्यावस्था से युक्त कहलाती है तथा इससे क्रमशः तेज उत्पन्न होता है ॥२१॥

मध्यावस्थायुतं तेजःपयसोर्द्रव्यमुच्यते।
रसतन्मात्रमित्यस्मात्सलिलं खलु जायते॥ २२॥

रसतन्मात्रं लक्षयति—मध्येति। तेजःपयसोर्मध्यावस्थायुतं द्रव्यं रसतन्मात्रमित्यर्थः। अस्मात् पय उत्पद्यते।

**रस** तन्मात्रा तेज और जल की मध्यावस्था से युक्त कहलाती है तथा इससे क्रमशः जल उत्पन्न होता है ॥२२॥

मध्यावस्थायुतं वारिपृथिव्योर्द्रव्यमुच्यते।
गन्धतन्मात्रमित्यस्मात्पृथिवी समुदेत्यसौ॥ २३॥

गन्धतन्मात्रं लक्षयति—मध्येति। वारिपृथिव्योर्मध्यावस्थायुतं द्रव्यं गन्धतन्मात्रम्। अस्मात् पृथिव्युत्पद्यते॥ २॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गन्ध तन्मात्रा जल और पृथिवी की मध्यावस्था से संयुक्त होती है तथा इससे यह पृथिवी उत्पन्न होती है ॥२३ ॥

आद्यं शब्दवदन्यच्च शब्दस्पर्शवदुच्यते ।
रूपशब्दस्पर्शवत्स्यात्तृतीयं च तुरीयकम् ॥ २४ ॥

रूपशब्दस्पर्शरसयुक्तं गन्धाधिकं परम् ।
तन्मात्रपञ्चकं भूतपञ्चकं चैवमीरितम् ॥ २५ ॥

आद्यमिति; शब्दतन्मात्रमित्यर्थः । शब्दवदिति; अविशिष्टशब्दवदित्यर्थः । अन्यत्; स्पर्शतन्मात्रमित्यर्थः ॥ २४ ॥

परम्; पृथिवीतन्मात्रमित्यर्थः । अनेन भूतानामपि एकद्वित्रादिगुणयोग उक्त-प्रायः ॥ २५ ॥

इस प्रकार प्रथम शब्द तन्मात्रा शब्दयुक्त होती है, द्वितीय स्पर्श तन्मात्रा शब्द और स्पर्श से युक्त होती है, तृतीय रूप तन्मात्रा रूप, शब्द और स्पर्श से युक्त होती है, चतुर्थ रस तन्मात्रा रस, रूप, शब्द और स्पर्श से युक्त होती है, तथा पंचम गन्ध तन्मात्रा गन्ध, रस, रूप, शब्द और स्पर्श से युक्त होती है। ये पंचतन्मात्राएँ हैं, इसी प्रकार एक, दो, तीन, चार और पांच गुणों के योग से क्रमशः आकाश, वायु, तेज, जल और पृथिवी- इन पांच महाभूतों का स्वरूप कहा गया है ॥२४-२५ ॥

एवं प्रकृतिरव्यक्तमहदादिक्रमाद्भिदाम् ।
चतुर्विंशतिसंख्यानां[1] प्रापिता सुनिरूपिता ॥ २६ ॥

चतुर्विंशतीति; प्रकृतिमहदहंकारास्त्रयः; एकादशेन्द्रियाणि; तन्मात्रपञ्चकं, भूतपञ्चकं चेति चतुर्विंशतिः ॥ २६ ॥

इस प्रकार अव्यक्त, महत् आदि क्रम से चौबीस भेदों वाली प्रकृति का निरूपण हुआ है ॥२६ ॥

---

१. संभेदं B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**भूतानि भगवान्सृष्ट्वा द्वेधैकैकं विभक्तवान्।**
**एकमेकं विधायांशं चतुर्धान्यं विभक्तवान्॥ २७ ॥**

अनन्तरं पञ्चीकरणमाह—भूतानीति । पञ्च भूतानीत्यर्थः । एकैकम्; आकाशादि प्रत्येकम्। एकमिति; द्वयोरन्यतरं प्रथमं भागम्। एकम्; अविभक्तम्। अन्यमंशम्; द्वितीयं भागम्। चतुर्धा विभक्तवान्॥ २७ ॥

भगवान् ने पंचमहाभूतों की सृष्टि करके आकाशादि प्रत्येक को बराबर के दो-दो भागों में विभक्त किया, तदुपरान्त इन प्रत्येक के एक-एक अर्धांश को अविभक्त रखकर दूसरे-दूसरे अर्धांश को बराबर के चार-चार भागों में विभक्त किया ॥२७ ॥

**चतुर्धा रचितानंशांस्तत्तदंशे युनक्ति सः।**
**चतुर्थांशयुतस्वांशैः पञ्च भूतान्यजीजनत्॥ २८ ॥**

तत्तदंशे:; तस्य तस्य भूतस्य द्विधा कृतस्याविभक्तेनार्धभागेन । युनक्ति; संयोजयति । चतुर्थांशेति; द्विधाकृतभूतान्तरभागयोर्योंशः चतुर्धा कृतः तस्य चतुर्थेनांशेन युतैः स्वांशैरित्यर्थः । पञ्च भूतानि; आकाशादीनि अयमत्राशयः—अण्डसृष्टेः पूर्वतनी सृष्टिः समष्टिसृष्टिपदवाच्या । ततोऽनन्तरसृष्टिस्तु व्यष्टिसृष्टिरित्युच्यते । आकाशं प्रथमतो द्विधा विभज्य तत्रैकमंशमविभक्तं स्थापयित्वा, अन्यमंशं चतुर्धा विभजनीयम्। एवं विभागेन प्राप्तेषु चतुर्ष्वंशेष्वेकैकमंशं भूतान्तराणां चतुर्णां द्वितीयार्धचतुर्थभागं परिकल्पयेत्। एवं वायुम्; तेजः, अपः, पृथिवीं च कुर्यात्। एवंकृते पञ्चीकृताकाशे प्रथममर्धमाकाशांशः; द्वितीयस्मिन्नर्धे प्रथमश्चतुर्थोऽशो वायोर्भागः, द्वितीयस्तेजसः;तृतीयोऽपाम्; तुरीयः पृथिव्याः । एवं वाय्वादावपि । एवं च सर्वेष्वपि भूतेषु सर्वेषामपि भूतानां भागाः सन्ति । तथाप्यधिकं भागमनुरुध्य तत्तद्भूतत्वव्यवहारः । शुक्तिरिति व्यवहारे शुक्तावर्धभागः शुक्तेरेव । अन्यस्मिन्नर्धभागे एकश्चतुर्थोऽश आकाशस्य, अन्यो वायोः, अन्योऽपाम्; अन्यस्तेजस इति सर्वभूतांशसंघात एव शुक्तिः । सैव यदि रजतमिति व्यवह्रियते, तदा तेजोभूतरजतांशोऽष्टमः सन्नपि बहुलं भासमानतया रजतमिति व्यह्रियत इति । एवंच, "यथार्थं सर्वविज्ञानमिति वेदविदां मतम्" इति सिद्धान्तः सिध्यति । तथाचाहुः—

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"द्वेधा भूतानि भित्त्वा पुनरपि च भिनत्त्यर्धमेकं चतुर्धा
तैरेकैकस्य भागैः परमनुकलयत्यर्धमर्धं चतुर्भिः ।
इत्थं पञ्चीकृतैस्तैर्जनयति स जगद्धेतुरण्डादिकार्या-
ण्यैदंपर्यं त्रिवृत्त्वश्रुतिरधिकगिरामक्षमैका निरोद्धुम् ॥"

इति ॥ २८ ॥

पुनः उसने एक-एक अविभक्त अर्धांश लिया उसमें दूसरे-दूसरे अर्धांश के चतुर्थांश को मिला दिया । इस प्रकार उसने अपने-अपने अर्धांश में दूसरे-दूसरे के चतुर्थांश अर्थात् प्रत्येक भूत के अष्टमांश को मिलाकर पांच महाभूतों की रचना की ॥२८ ॥

अन्यभूतांशसत्त्वेऽपि स्वांशभूयस्त्वतः कृतः ।
पृथ्व्यप्तेजोऽनिलव्योमव्यपदेशो जगत्यभूत् ॥ २९ ॥

यदि सर्वत्र भूतेषु सर्वभूतानामंशाः सन्ति, तर्हीतरव्यावृत्ततया पृथिव्यादि-व्यवहारः कथमित्याशङ्क्य परिहरति—अन्येति । यत्र यस्य भूतस्यांशो भूयान्, तत्र तद्भूतत्वेन व्यवहारः । यथा पृथिव्या आद्यमर्धं पृथिव्यंशः । अन्यस्मिन्नर्धे भूतान्तराणामष्टमांशा इति पृथिव्यंशस्य भूयस्त्वात् तत्त्वेन व्यवहारः ॥ २९ ॥

अन्य भूतों का अंश रहने पर भी स्वयं का अंश अधिक रहने के कारण इन प्रत्येक का नाम क्रमशः आकाश, वायु, तेज, जल और पृथिवी हुआ ॥२९ ॥

पञ्चीकरणमेतादृगुपलक्षयति श्रुतिः ।
भूतैर्महदहंकृत्योः सप्तीकृतिरुपस्कृता ॥ ३० ॥

नन्वेतत् पञ्चीकरणं श्रुतिविरुद्धम् । श्रुतौ हि, "तेजोऽसृजत" इत्यादिभिर्वाक्यैः तेजोऽबन्नसृष्टिमुक्त्वा तेषां त्रिवृत्करणमेवोच्यत इत्याशङ्क्य समाधत्ते—पञ्चीकरणमिति । श्रुतिः, त्रिवृत्करणश्रुतिः । एतादृक् पञ्चीकरणमुपलक्षयति । त्रिवृत्करणवचनं पञ्चीकरणस्याप्युपलक्षकमित्यर्थः । न केवलं पञ्चीकरणस्य, सप्तीकरणस्याप्युपलक्षकमित्याह—भूतैरिति । त्रिवृत्करणश्रुतिः, पञ्चभूतानि महान् अहंकारः इति सप्तानां पदार्थानां मिथो मिश्रीकरणेन सृष्टेरप्युपलक्षणमित्यर्थः ॥ ३० ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

श्रुति भी ऐसे **पञ्चीकरण** को कहती है। इस पञ्चीकरण में जब महत् और अहंकार को मिला दिया जाता है तो वह **सप्तीकरण** हो जाता है ॥३० ॥

**भूतपञ्चकमव्यक्तमेते महदहंकृती।**
**उपादानानि देहस्येन्द्रियाणि प्रतिपूरुषम्॥ ३१ ॥**

**भिन्नान्याकल्पकल्पानि शरीरं भूषयन्ति हि।**
**चेतनैकनियाम्यं यच्छरीरं तन्निगद्यते॥ ३२ ॥**

नन्वेतावता प्रबन्धेनेन्द्रियाणामाहंकारिकत्वादभौतिकत्वमभ्युपगतमिव भाति। तच्चासंगतम्, प्रमाणविरोधात्। तथाहि भगवद्गीतायाम्—

"महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥

इच्छा द्वेषः सुखं दुःखं संघातश्चेतनाधृतिः।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम्॥"

इति क्षेत्रशब्दवाच्यस्य शरीरस्य महाभूतेन्द्रियाद्यात्मकत्वमुक्तम्। शरीरस्य भौतिकत्वात् तदवयवानामिन्द्रियाणामपि भौतिकत्वमङ्गीकृतमेव। तथाच पारमर्षं सूत्रम्; "घ्राणरसनाचक्षुस्त्वक्छ्रोत्राणीन्द्रियाणि भूतेभ्यः। पृथिव्यापस्तेजो वायुराकाशमिति भूतानि"इति, "भूतविशेषगुणोपलब्धेस्तादात्म्यम्" इति च। किंच शरीरेण सहैवेन्द्रियाण्यपि विनश्यन्ति दृश्यन्ते। अतो भौतिकान्येवेन्द्रियाणीत्याशङ्कायामाह—भूतपञ्चकमित्यादि। भूतपञ्चकम्, पृथिव्यादिपञ्चकम्; अव्यक्तम्, प्रकृतिः; महान्, अहंकारो भूतादिनामा तामसाहंकारः; आहत्याष्टकमिदं शरीरस्योपादानं भवति। इन्द्रियाणि त्विति। तुशब्दोऽत्र वैलक्षण्ये, इन्द्रियाणां भौतिकत्वं निषेधति। अनुपूरुषम्; प्रतिपुरुषम्। भिन्नानीत्यनेनैकेन्द्रियवादोऽपि निरस्तो भवति। यदीन्द्रियाणि न भौतिकानि, नापि शरीरावयवभूतानि; कस्तर्हि तैः शरीरस्योपकार इत्यत्राह—आकल्पेति। आकल्पोऽलंकारः। यथा कटकादीनि शरीरस्यालंकरणाय शरीरमाश्रित्यवतिष्ठन्ते, तथेन्द्रियाण्यपि शरीरालंकरणाय तदाश्रित्य वर्तन्त इत्यर्थः। अनेन पूर्वोदाहृतगीतावचनमपि व्याख्यातं भवति। यथा अध्यायारम्भे—

"तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु॥"

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इत्यत्र यच्चेत्यनेन क्षेत्रं यद्द्रव्यात्मकमिति, यादृक् चेत्यनेन येषामाश्रयभूतमिति, यद्विकारीत्यनेन यादृशविकारास्पदमिति, यतश्चेत्यनेन यस्मै प्रयोजनायेति, यदित्यनेन यत्स्वरूपमिति च वक्तव्यांशान् प्रस्तुत्य, "महाभूतान्यहंकारः" इत्यादिना तत्सर्वं विवृतम्। तत्र महाभूतानीत्यर्थेन क्षेत्रं महाभूताद्युपादानकमित्युक्तम्। "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः" इत्यनेन क्षेत्रमेकादशेन्द्रियाणां शब्दस्पर्शादीनां चाश्रयभूतमित्युक्तम्। "इच्छा द्वेषः सुखं दुःखम्"इति क्षेत्रविकारा उच्यन्ते। यद्यपीच्छादय आत्मधर्माः, तथापि तस्य ते क्षेत्रसंबन्धप्रयुक्ता इति प्राप्ताप्राप्तविवेकनयेन क्षेत्रविकारा उच्यन्ते। "संघातश्चेतनाधृतिः" इत्यनेन तत्प्रयोजनं तत्स्वरूपं चोक्तम्। अनेनेन्द्रियाणां देहाश्रितत्व मेवोक्तम्। न तु तदवयत्वमिति भावः। पारमर्षवचनं तु यथाकथंचिदागमाविरोधेन नेयम्। आगमो हि लयप्रकरणे, "आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते" इति सेन्द्रियाणां तन्मात्राणामहंकारे लयमाह। यदीन्द्रियाणि भौतिकानि, तदा तेषां भूतेष्वेव हि लयो वक्तव्यः। आगमविरोधादेव तेषां भौतिकत्वसाधनतयाभिमंतान्यनुमानान्यपि दुष्टान्येव। एवं च शरीरे विनष्टेऽपीन्द्रियाणामाप्रलयं सूक्ष्मरूपेणावस्थितिरिति सिद्धम्।

अथ प्रसक्तस्य शरीरस्य लक्षणमाह—चेतनैकेति। एकशब्दोऽत्र नैयत्यपरः। नियमेन यत् यस्य चेतनस्य नियाम्यं तत्तस्य शरीरमित्यर्थः। भृत्यानां स्वामिनियाम्यत्वेऽपि तन्नियमनस्य नैयत्याभावेन न तेषां तं प्रति शरीरत्वम्। नन्वेवं चेतनाचेतनानां सर्वेषां नियमेनेश्वरनियाम्यत्वात् ईश्वरं प्रति तेषां शरीरत्वं स्यादिति चेत्, हन्ता स एवास्माकं परमः सिद्धान्त इति महता कुतूहलेन तदिष्टापत्त्याभ्युपगच्छामः। चेष्टाश्रयः शरीरम्, इन्द्रियाश्रयः शरीरम्, भोगोपकरणं शरीरमित्यादीनि तु अव्याप्त्यतिव्याप्त्यादिदुष्टानीति हेयानि। चेष्टाश्रयत्वं घटादावतिव्याप्तम्। इन्द्रियाश्रयत्वं यदीन्द्रियसंयोगित्वं तदा घटादावतिव्याप्तिः। यदीन्द्रियसमवायित्वं तदा सिद्धान्ते समवायानङ्गीकारात् स एव दोषः। परमतरीत्या इन्द्रियावयवेष्वतिव्याप्तं च। भोगायतनत्वं तु गृहारामादवतिव्याप्तम्। शिरः पाण्यादिमत्त्वं तदिति चेत्, तद्रहितेषु स्थावरशरीरेष्वव्याप्तिः। अतोऽस्मदुक्तमेव लक्षणं साध्विति भावः॥ ३१-३२॥

अव्यक्त, महत् और अहंकार के साथ पंचमहाभूत देह अथवा शरीर के उपादान कारण होते हैं, किन्तु इन्द्रियां प्रत्येक पुरुष की भिन्न-भिन्न होती

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हैं, क्योंकि वे शरीर को आभूषण की भांति भूषित करती हैं। जो चेतनामात्र से नियन्त्रित होता है वह उसका शरीर कहा जाता है ॥३१-३२ ॥

शरीरं द्विविधं नित्यमनित्यमिति भेदतः।
भगवन्नित्यसूरीणां नित्यं नैसर्गिकं तु तत्॥ ३३ ॥

शंरीरस्य द्वैविध्यमाह—शरीरमिति। नित्यम्; उत्पत्तिनाशरहितम्। अनित्यम्; तद्वत्। भगवतः त्रिगुणकालजीवादीनि नित्यशरीराणि। तथा अनन्तगरुडादिनित्यसूरीणां शरीरं नित्यं स्वाभाविकं च ॥ ३३ ॥

शरीर नित्य और अनित्य भेद से दो प्रकार का होता है। भगवान् और अनन्त-गरुडादि नित्यसूरियों का नित्य शरीर होता है और वह नैसर्गिक-स्वाभाविक होता है ॥३३ ॥

अनित्यमपि तद् द्वेधा कर्माकर्मकृतत्वतः।
अकर्मकृतमीशादेरिच्छया परिकल्पितम्॥ ३४ ॥

अनित्यशरीरस्य द्वैविध्यमाह—अनित्यमपीति। कर्मकृतकर्मकृतं चेति द्वैविध्यमित्यर्थः। तत्राकर्मकृतमाह—ईशादेरिति। महदादिकार्यवर्गः सर्वोऽपीश्वरस्याकर्मकृतदेह इत्यर्थः। ईश्वरस्याकर्मकत्वात् तस्याकर्मकृतत्वम्। किंतु केवलस्वेच्छाकृतत्वमेवेति भाव्यम्। तथाहि गीयते भगवतैव—

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥"

इति। आत्ममायया; मदीयया इच्छयेत्यर्थः।

कर्मकृत और अकर्मकृत भेद से अनित्य शरीर दो प्रकार का होता है। अकर्मकृत शरीर ईश्वर और नित्यसूरियों की इच्छा या संकल्प से प्राप्त होता है ॥३४ ॥

तच्च कर्मकृतं द्वेधा स्वेच्छासहकृतं तथा।
कर्ममात्रकृतं चेति सौभर्यादेर्यथादिमम्॥ ३५ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कर्मकृतशरीरभेदमाह—तच्चेति। स्वेच्छासहकृतकर्मकृतं तदसहकृतकेवलकर्मकृतं चेति द्विधेत्यर्थः। आदिमं स्वेच्छासहकृतं सौभर्यादीनामित्यर्थः।

**कर्मकृत** शरीर दो प्रकार का होता है- स्वेच्छासहकृत तथा कर्ममात्रकृत। सौभरि आदि पुण्यात्माओं का शरीर **स्वेच्छासहकृत** कहा जाता है ॥३५॥

**द्वितीयमस्मदादीनां सामान्येन पुनर्द्विधा।**
**स्थावरं जङ्गमं चेति शिलादि स्थावरं मतम् ॥ ३६ ॥**

केवलकर्मकृतमाह—द्वितीयमिति। अस्मदादीनामिति; कर्मपरवशानां संसारिणामित्यर्थः। सामान्येनेति; नित्यानित्यविभागानादरेण शरीरसामान्यं स्थावरजङ्गमात्मना द्विविधमित्यर्थः। शिलादीति; काष्ठादय आदि पदग्राह्याः ॥ ३६ ॥

हम कर्मपरवश संसारियों का शरीर **कर्ममात्रकृत** होता है। सामान्य रूप से यही शरीर स्थावर और जंगम भेद से दो प्रकार का होता है। शिला आदि **स्थावर** कहलाता है ॥३६॥

**जङ्गमं च द्विधा प्रोक्तं स्याद्योनिजमयोनिजम्।**
**योनिजं देवमानुष्यतिर्यगादिविभागवत्[1] ॥ ३७ ॥**

जङ्गमस्य द्वैविध्यमाह—जङ्गमं चेति। योनिजायोनिजभेदेन द्विविधमित्यर्थः। तत्र योनिजजङ्गमभेदानाह—देवेत्यादि। शुक्रशोणितसंयोगाज्जातं योनिजमित्युच्यते ॥ ३७ ॥

**जंगम** दो प्रकार का कहा गया है- योनिज और अयोनिज। देव, मनुष्य, तिर्यक् आदि **योनिज** हैं ॥३७॥

**[2]उद्भिज्जस्वेदजाण्डोत्थनारक्याख्यमयोनिजम्।**
**एवं पञ्चीकृतानां स्यादण्डोत्पादकता स्मृता ॥ ३८ ॥**

---

१. तिर्यङ्नारकिभेदवत् A.B. भेदतः G
२. उद्भिज्जस्वेदजजराय्वण्डजाख्य A.B.G.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अयोनिजजङ्गमभेदानाह—उद्‌भिज्जेत्यादि । उद्‌भिद्य जायन्त इतीन्द्रगोपमण्डूकादय उद्‌भिज्जा इति सुश्रुते । स्वेदजाः यूकामत्कुणादयः । अण्डोत्थाः पक्षिसरीसृपादयः । नारकि नरकवासिनां शरीरम् । तच्च तेषां पापैरेवोपजनितमयोनिजमित्यर्थः । अनन्तरं पञ्चीकरणप्रयोजनमाह—एवमिति । पञ्चीकृतानामिति; पञ्चीकृतानामेवेत्यर्थः । तदुक्तम्—

"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥"

इति ॥ ३८ ॥

**अयोनिज** उद्‌भिज्ज, स्वेदज, अण्डज और नारकी हैं। इस प्रकार पञ्चीकरण का प्रयोजन अण्डोत्पादकता कही गयी है ॥३८ ॥

**अण्डोत्पत्तेः पूर्वसृष्टिः समष्टिरत उत्तरा ।**
**व्यष्टिसृष्टिरिति द्वेधा सृष्टिर्वेदान्तिसंमता ॥ ३९ ॥**

सृष्टिर्द्विधा—समष्टिसृष्टिः, व्यष्टिसृष्टिश्चेति । तत्र अण्डोत्पत्तेः पूर्वतनी या सृष्टिः सा समष्टिसृष्टिरित्युच्यते । अण्डोत्पत्तेरुत्तरं संपद्यमाना सृष्टिः व्यष्टिसृष्टिरित्युच्यत इत्यर्थः ॥ ३९ ॥

अण्डोत्पत्ति से पूर्वसृष्टि **समष्टिसृष्टि** है, तथा उत्तरसृष्टि **व्यष्टिसृष्टि** है। यह द्विविध सृष्टि सभी वेदान्तियों को स्वीकार है ॥३९ ॥

**[1]अव्यक्तादेर्महत्त्वादिरवस्थान्तरमिष्यते ।**
**विजातीयान्तरावस्था चेत्तत्त्वान्तरमीर्यते ॥ ४० ॥**

'अवस्थान्तरयोगित्वमुपादानत्वमुच्यते' इति पूर्वोक्तस्यावस्थान्तरपदस्यार्थं विवृणोति—अव्यक्तादेरिति । महत्त्वादिरिति । अव्यक्तमेव यदा अव्यक्तावस्थां विहाय महद्रूपावस्थामाधत्ते, सैवावस्थान्तरापत्तिरित्यर्थः । तदेवं तत्त्वानामेव तत्त्वान्तरात्मना परिणतौ विजातीयमवस्थान्तरं निमित्तीकृत्य तत्त्वान्तरत्वेन परिगणनं क्रियत इत्यर्थः ॥ ४० ॥

---

१. अङ्कुरादेः A.B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अव्यक्त आदि से महदादि की उत्पत्ति अवस्थान्तर कही जाती है। यदि यह उत्पत्ति विजातीयान्तरावस्था होती है तो तत्त्वान्तर कही जाती है ॥४० ॥

इत्थमव्यक्तमहदहंकारेन्द्रियनामकैः ।
तन्मात्राणीति तत्त्वानि चतुर्विंशतिधाभवन् ॥ ४१ ॥

तदेवं परिनिष्पन्नां तत्त्वसंख्यामाह—इत्थमिति । तत्त्वानि अव्यक्ताद्यात्मना चतुर्विंशतिधा परिगण्यन्त इत्यर्थः ॥ ४१ ॥

इस प्रकार अव्यक्त, महत्, अहंकार, एकादश इन्द्रियां, पंच तन्मात्राएं तथा पंचमहाभूत- ये चौबीस तत्त्व हुए ॥४१ ॥

भोग्यभोगोपकरणभोगस्थानानि चेशितुः[1] ।
जीवस्य च प्रकृत्यादीन्युद्भवन्ति यथायथम् ॥ ४२ ॥

एषां जडानां विधान्तरेण विभागमाह—भोग्येत्यादि । ईशितुरीश्वरस्य जीवस्य च भोग्यभोगोपकरणभोगस्थानरूपेण जडतत्त्वानि भवन्तीत्यर्थः ॥ ४२ ॥

प्रकृति आदि ईश्वर और जीव के लिए यथायथ भोग्य, भोगोपकरण और भोगस्थान रूप से जड तत्त्व होते हैं ॥४२ ॥

विषयो भोग्यमक्ष्यादि भोगोपकरणं मतम् ।
भोगस्थानं तु भुवनं तद्वर्तीन्यण्डजानि हि ॥ ४३ ॥

भोग्यादीन् विविनक्ति—विषय इति । विषयः श्रोत्रादीन्द्रियविषयः । भोगोपकरणं तु अक्ष्यादि । भोगस्थानानि तु समस्तं भुवनं तदन्तर्वर्तीनि च ब्रह्माण्डजानि ॥ ४३ ॥

विषय भोग्य होते हैं, आंख आदि भोगोपकरण कहलाते हैं तथा भुवन और उनके अन्तर्वर्ती ब्रह्माण्डज भोगस्थान हैं ॥४३ ॥

---

१. भोगस्थानानि भूम्यादिभुवनान्यण्डमीदृशम्. G.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

एवं पञ्चीकृतैर्भूतैरारब्धं प्राकृतं भवेत्।
कपित्थफलकाकारमण्डं नाम निगद्यते ॥ ४४ ॥

अनन्तरमण्डोत्पत्तिमाह—एवमिति । भूतैः आकाशादिभिः पञ्चभिस्तत्त्वैः । प्राकृतमण्डम्; प्राकृतैर्भूतैरारब्धत्वात् प्राकृतत्वमण्डस्य । कपित्थफलकाकारमिति निदर्शनम् । यथा कपित्थफलस्यान्तर्भागे सूक्ष्माणि बहूनि बीजानि, तत्संबद्धा मधुरा अमधुराश्च फलांशा अपि विद्यन्ते, तद्वत् अण्डस्यान्तर्भागेऽपि सूक्ष्माणि बहूनि जीवतत्त्वानि तत्संसृष्टाः सुखदुःखात्मकाः प्राकृतभागाश्च विद्यन्त इत्यर्थः ॥ ४४ ॥

इस प्रकार पञ्चीकृत महाभूतों से आविर्भूत प्राकृत अण्ड होता है । यह अण्ड नाम कपित्थफल के सदृश होने से कहा जाता है ॥४४ ॥

जम्बूद्वीपमिदं सर्वं लवणोदधिनावृतम्।
प्लक्षद्वीपं ततोऽपीक्षुसमुद्रेण प्रवेष्टितम् ॥ ४५ ॥

"सप्त द्वीपा वसुमती" इत्युक्तरीत्या सप्त द्वीपान्याह—जम्बूद्वीपमिदमिति । इदमित्यस्मत्प्रत्यक्षगोचरतामाह । इदं च लवणोदधिना परिवृतम् । ततः लवणसमुद्रादन्तरं प्लक्षद्वीपं वर्तते । तच्चेक्षुसमुद्रेण परिवृतम् ॥ ४५ ॥

यह सम्पूर्ण जम्बूद्वीप लवणोदधि= खारे सागर से आवृत घिरा हुआ है । उस लवणसमुद्र के परे प्लक्षद्वीप है जो इक्षु-समुद्र से परिवृत = घिरा हुआ है ॥४५ ॥

ततस्तु शाल्मलिद्वीपं सुरासागरवेष्टितम्।
कुशद्वीपं ततः सर्पिः समुद्रेण प्रवेष्टितम् ॥ ४६ ॥

ततः इक्षुसमुद्रादनन्तरं शाल्मलिद्वीपं वर्तते । तच्च सुरासमुद्रेण वेष्टितम् । ततः सुरासमुद्रादनन्तरं कुशद्वीपं वर्तते । तच्च सर्पिः समुद्रेण परिवेष्टितम् ॥ ४६ ॥

उसके बाद शाल्मली-द्वीप है जो सुरासमुद्र से वेष्टित है, ततः सर्पिःसमुद्र से वेष्टित कुशद्वीप है ॥४६ ॥

क्रौञ्चद्वीपं ततः पश्चाद्दध्यर्णवसमावृतम्।
शाकद्वीपं ततः क्षीरसमुद्रेण प्रवेष्टितम् ॥ ४७ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ततः सर्पिःसमुद्रादनन्तरं क्रौञ्चद्वीपं वर्तते । तच्च दधिसमुद्रेण परिवेष्टितम् । ततः दधिसमुद्रादनन्तरं शाकद्वीपं वर्तते । तच्च क्षीरसमुद्रेण वेष्टितम् ॥ ४७ ॥

ततः **क्रौञ्चद्वीप** है जो दधि-समुद्र से परिवेष्टित है, ततः क्षीर-समुद्र से वेष्टित **शाकद्वीप** है ॥४७ ॥

**पुष्करद्वीपमभितः शुद्धाम्बुधिसमावृतम् ।**
**सर्वमेतद्धैमभूम्या ततो वलयपर्वतः ॥ ४८ ॥**

अभितः क्षीरसमुद्रस्य समन्तात् पुष्करद्वीपं वर्तते । तच्च शुद्धाम्बुधिना समावृतम् । एतत्सर्वम् निखिलमप्येतत् हैमभूम्या परिवृतम् । ततः वलयपर्वतः वलयाकारपर्वतो वर्तते ॥ ४८ ॥

इसके बाद शुद्धाम्बुधि से समावृत **पुष्करद्वीप** है । ये सभी द्वीप हैम-भूमि = स्वर्णभूमि से परिवृत हैं । ततः वलयाकार वलयपर्वत है ॥४८ ॥

**अन्धकारावृतः सोऽपि सोऽपि गर्भोदकेन च ।**
**ततोऽण्डमेकमेवं स्याद्भूमेरूर्ध्वमधोऽपि च ॥ ४९ ॥**

वलयपर्वतोऽप्यन्धकारेण तमसा निबिडो भवति । सोऽपि वलयपर्वतोऽपि गर्भोदकेन परिवृतो भवति । ततोऽण्डं भवति । एवं भूमौ यथा वर्णितं तथा भूमेरूर्ध्वमधश्च बहवो देशा वर्तन्त इत्यवगन्तव्यम् ॥ ४९ ॥

वलयपर्वत अन्धकार से आवृत है तथा वह वलयपर्वत भी गर्भोदक से घिरा हुआ है । उसके बाद एक ही **अण्ड** है जो पृथिवी के ऊपर और नीचे है, जैसा कि पृथ्वी के ऊपर और नीचे बहुत से देश कहे गये हैं ॥४९ ॥

**अण्डान्येतादृशानि स्युरनन्तानि महाहरेः ।**
**जलबुद्बुदकल्पानि पुराणोक्तान्यनुक्रमात् ॥ ५० ॥**

एतानि सर्वाप्यण्डानि अनन्तानि । तानि सर्वाण्यपि हरेर्विभूतयः जले बुद्बुदानीव भासन्ते । एष चाण्डानां क्रमः पुराणेषूक्तः ॥ ५० ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

महाहरि के ऐसे अनन्त अण्ड हैं जो जल में बुद्बुद के समान हैं अर्थात् ये सभी अण्ड जल में बुद्बुद के समान हरि की अनन्त विभूतियां हैं, जिनका पुराणों में क्रमशः वर्णन हुआ है ॥५०॥

इति वेदान्तकारिकावल्यां प्रकृतिनिरूपणं चतुर्थं प्रकरणम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ५. कालनिरूपणम्

**गुणत्रयविहीनो यः स जडः काल उच्यते।**
**अखण्डखण्डभेदेन स कालो द्विविधो मतः ॥ १ ॥**

तदेवं प्रकृतिकालशुद्धसत्त्वधर्मभूतज्ञानजीवेश्वरभेदभिन्नेषु द्रव्येषु प्रकृतिं निरूप्यानन्तरं प्राप्तकालं कालं निरूपयितुं प्रकरणान्तरमारभ्यते। सांख्यसौगत-चार्वाकाः कालतत्त्वमत्यन्ताय निह्नुवते। पाशुपतास्तु कालतत्त्वमभ्युपयन्तोऽपि द्रव्यान्तराणामिवास्यापीश्वरमायासृज्यत्वमातिष्ठन्ते। यदाह तत्त्वप्रकाशे भोजः—

"नानाविधशक्तिमयी सा जनयति कालतत्त्वमेवादौ।
भाविभवद्भूतमयं कलयति जगदेवकालोऽतः॥"

इति। वैशेषिकास्तु अस्य नित्यविभुत्वमङ्गीकुर्वन्तोऽप्यनुमानगम्यत्वं संगिरन्ते। तथाचाहुः—"अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि" इति। तत्सर्वं प्रतिक्षिपन् सिद्धान्तमाह—गुणत्रयेति। 'प्रकृतिः काल इत्याद्या' इति प्रकृतेर्विलक्षणतया निर्देशादप्राकृतोऽयं कालः। अतः प्रकृतिधर्मत्रैगुण्यरहितः। सात्त्विकः काल इत्यादिव्यवहारस्तु तथाभूतत्तद्वस्तुव्यतिकरनिबन्धनः। जड इति; अनेनास्य पराक्त्वमप्युक्तं भवति। तस्य द्वैविध्यमाह—अखण्डेति। कलामुहूर्त-दिवसपक्षमासादयः खण्डकालाः तत्तदुपाधिनिबन्धनास्तद्विकारभेदा अवग-न्तव्याः ॥ १ ॥

**सत्त्व, रजस् और तमस्- इन तीन गुणों से शून्य जो जड द्रव्य है वह काल कहा जाता है। काल अखण्ड और खण्ड भेद से दो प्रकार का होता है ॥१ ॥**

**आद्यो विभुर्भूतभाविवर्तमानत्वधीकरः।**
**निमेषादिप्रभेदेन बहुभेदस्त्वसौ मतः ॥ २ ॥**

आद्य इति; अखण्डकाल इत्यर्थः। विभुरिति; सर्वमूर्तद्रव्यसंयोगित्वं विभु-त्वम्। न तु परममहत्परिमाणत्वम्। तस्य सामान्येन त्रैविध्यमाह—भूतेति। भूतो घटः, भावी घटः, वर्तमानो घटः इत्यादिरूपेण भूतत्वभावित्ववर्तमानत्वप्रकारकधी-भेदकारीत्यर्थः। कालस्य सर्वत्र पदार्थविशेषणतयैव प्रतीतेः पदार्थप्रत्यक्षे काल-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्यापि प्रत्यक्षत्वमनेनोक्तं भवति। एतेन त्रिविधभेदे प्रमाणमपि दर्शितं भवति। प्रभेदान्तराण्याह—निमेषादीति। आदिपदेन काष्ठाकलामुहूर्तदिवसादयो ग्राह्याः। असौ अखण्डकालो बहुभेदो मत इत्यर्थः ॥ २ ॥

**अखण्ड** काल विभु होता है जो भूत, भविष्यत् और वर्तमान का ज्ञान कराता है तथा निमेषादि के भेद से बहुत प्रकार का होता है ॥२ ॥

**अखण्डकाल एवायं नित्य इत्यवगम्यते।**
**कालः स्वकार्यं प्रति तु स्यादुपादानकारणम् ॥ ३ ॥**

सिंहावलोकनन्यायेन पुनश्चाखण्डकाले विशेषमाह—अखण्डकाल एवेति। एवकारः खण्डकालं व्यवच्छिनत्ति। नित्य इति;उत्पादविनाशरहित इत्यवगम्यते। खण्डकालस्तूत्पादविनाशशालीति फलितोऽर्थः। ननु नित्यस्य विभोश्चाखण्डकालस्य निमेषादिरूपेण विकाराभ्युपगमे नित्यत्वविभुत्वे भज्येयातामिति चेत्, अत्र ब्रूमः—विकारो हि द्विधा। अवयवोच्छूनताह्रासलक्षणः, नामान्तरभजनार्हतालक्षणश्च। द्विविधोऽप्येष विकारो न नित्यत्वविरोधी। नित्याया एव प्रकृतेरीदृशविकारभजनस्य प्रमाणप्रतिपन्नत्वात्। तथाच श्रूयते—"अजामेकां लोहितशुक्लकृष्णाम्" इति। अजामिति नाशराहित्यस्याप्युपलक्षणम्। अनेन नित्यत्वमुक्तं भवति। एकामिति नैकविधविकारजातमूलत्वमुच्यते। लोहितशुक्लकृष्णामिति तेजोऽबन्नात्मना परिणतिरुच्यते। तेजोऽबन्नात्मना परिणाममापन्नापि सा अजा एकैवेति विवक्षितोऽर्थः। तथा स्मृतिरपि—"अचेतना परार्था च नित्या सततविक्रिया" इति। महदहंकारभूताद्यात्मना सततं परिणममानापि नित्येति विवक्षितोऽर्थः। तथा अवयवोच्छूनताह्रासलक्षणो विकारो यद्यपि विभुनि न संभवति, तथापि नामान्तरभजनार्हतालक्षणस्तु संभवत्येव। अन्यथा प्रपञ्चशरीरके ब्रह्मणि तत्तन्नामभाजि विभुत्वं भज्येतेति सिद्धान्तव्याकोपः स्यात्। स चायमखण्डः कालः कार्यसामान्यं प्रति सहकारिकारणं भवति। स्वस्य यत्कार्यं निमेषकाष्ठादि तत्प्रति तु स्वयमुपादानकारणं भवति ॥ ३ ॥

यह अखण्ड काल ही नित्य जाना जाता है। यह अपने निमेषादि कार्य के प्रति उपादान कारण कहा जाता है ॥३ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कार्यरूपस्ततो नैव नित्य इत्यवधार्यताम्।
लीलाविभूतावीशानः कालमालम्ब्य कार्यकृत् ॥ ४ ॥

ततः अखण्डकालकार्यतया कार्यरूपो निमेषादिः खण्डकालो नैव नित्यः। किंत्वनित्य इत्यवधार्यताम्। ईशानः सर्वेश्वरः कालं सहकारितयालम्ब्यैव लीलाविभूतौ प्राकृतप्रपञ्चे सर्वमपि कार्यं करोति ॥ ४ ॥

अतएव अखण्डकाल के कार्यरूप निमेषादि नित्य नहीं हैं, किन्तु अनित्य हैं, वे खण्ड काल समझने चाहिए। ईशान सर्वेश्वर काल का अवलम्बन कर अपनी लीलाविभूति अर्थात् प्राकृतप्रपञ्च में सभी कार्य करते हैं ॥४ ॥

एष नित्यविभूतौ तु न कालमवलम्बते।
क्रीडापरिकरः सोऽयं कालस्तु परमात्मनः ॥ ५ ॥

एष इति। एष ईश्वरः। कालं नावलम्बते, कालमपेक्ष्य न करोतीत्यर्थः। अनेन नित्यविभूतावपि कालसद्भाव उक्तः। तदुक्तम्—"कालं स पचते तत्र न कालस्तत्र वै प्रभुः" इति। अतः सोऽयं कालः परमात्मनः क्रीडापरिकरः लीलोपकरणमित्यर्थः ॥ ५ ॥

यह ईश्वर नित्यविभूति में काल का अवलम्बन नहीं करते हैं, अतः यह काल परमात्मा का क्रीडापरिकर अथवा लीलोपकरण है ॥५ ॥

नित्यनैमित्तिकप्राकृतलया. कालहेतुकाः।
एवं प्रकाशितं कालस्वरूपस्य निरूपणम् ॥ ६ ॥

नित्येति। प्रलयस्त्रिधा—नित्यप्रलयः, नैमित्तिकप्रलयः, प्राकृतप्रलयश्चेति। त्रिविधेऽपि प्रलये कालो भगवतः सहकारिकारणं भवतीत्यर्थः। त्रिविधप्रलयस्वरूपं चैवमुपवर्णितं पुराणेषु। यथा कौर्मे—

"योऽयं संदृश्यते नूनं नित्यं लोके क्षयस्त्विह।
नित्यः संकीर्त्यते नाम्ना मुनिभिः प्रतिसंचरः ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति ।
त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ॥

महदादिविशेषान्तं यदा संयति संक्षयम् ।
प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ॥"

इति । नित्यप्रलयो नामदैनंदिनसुषुप्तिरूपः । सुषुप्तौ हि जीवानां ब्रह्मप्राप्तिः श्रूयते—एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" इति । नैमित्तिकप्रलयो नाम चतुर्मुखब्रह्मणो दिवसावसानात्मकः । प्राकृतप्रलयो नाम चतुर्मुखब्रह्मणां सह ब्रह्माण्डस्य तत्स्थानां च विनाशरूपः । एते त्रिविधाः प्रलयाः कालहेतुका भवन्ति ॥ ७ ॥

नित्य, नैमित्तिक और प्राकृत- यह त्रिविध प्रलय काल के अधीन होती है । अर्थात् त्रिविध प्रलय में काल भगवान् का सहकारी कारण होता है । इस प्रकार काल का स्वरूप कहा गया है ॥६ ॥

इति वेदान्तकारिकावल्यां कालनिरूपणं पञ्चमं प्रकरणम् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ६. नित्यविभूतिनिरूपणम्

**शुद्धसत्त्वे धर्मभूतज्ञानजीवेश्वरेषु च।**
**अजडत्वं भवेल्लक्ष्म तत्पुनः स्वप्रकाशता ॥ १ ॥**

कालनिरूपणानन्तरं क्रमप्राप्तं शुद्धसत्त्वं निरूप्यते। शुद्धसत्त्वमेव नित्यविभूतिरिति च व्यवह्रियते। रजस्तमोभ्यामकरम्बितसत्त्ववत्त्वात् शुद्धसत्त्वं भवति। तत्रादौ शुद्धसत्त्वसद्भावे प्रमाणान्याकलयामः। "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति श्रुतिरप्राप्तत्वात् सदापश्यदनेकसूरिपरिकर्मितं स्थानविशेषं विधत्ते। "अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः" इति हि प्रमाणविदः। अत्र च विष्णोरिति व्यधिकरणषष्ठ्या पदशब्दस्य स्वरूपपरत्वादपि स्थानविशेषपरत्वं स्वारसिकम्। तथा "आदित्यवर्णं तमसः परस्तात्", "विश्वं पुराणं तमसः परस्तात्," "क्षयन्तमस्य रजसः पराके" इत्यादावपि तद्विधिः। रजस्तमोभ्यामुपलक्षितप्राकृताण्डबहिर्देशोऽत्र प्रतीयते। अस्य रजसः पराके परस्तात् दिव्यदेशे क्षयन्तं निवसन्तमित्यर्थः। तथा जैमिनीयब्राह्मणे शाट्यायनिनः,"सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते" इति सहस्रस्थूणादिमद्देशविशेषपरां श्रुतिमधीयते। एवं कौषीतकिनोऽपि पर्यङ्कविद्यायां प्रजापतिलोकानन्तरं ब्रह्मलोकं प्रस्तुत्य, "तस्यारो हृदो मुहूर्ता यष्टिहाः" इत्यादिना अपराजिताभिधानं शुद्धसत्त्वमधीयते। अपि च छान्दोग्ये, "तृतीयस्यामितो दिवि तदैरंमदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूः" "अरं च ण्यं चार्णवौ ब्रह्मलोके" इत्यादिना नित्यविभूतिर्वर्णिता। सन्ति चात्रोपबृंहणानि परःशतानि वचनानि।

एवं स्थिते यदत्र केषांचित्प्रत्यवस्थानम्—"सदेव सोम्येदमग्र आसीत्" इति सृष्टेः प्राक् सजातीयविजातीयस्वगतभेदशून्यस्यैकस्य वस्तुनः प्रतिपादनान्नित्यविभूतिनामा देशविशेषोऽङ्गीकर्तुं न शक्यते। पूर्वोदाहृतप्रमाणवचनानि सर्वाणि सगुणब्रह्मविद्यानिष्ठप्राप्यकाल्पनिकदेशविशेषपराणि, न तात्त्विकप्रतिपादकानीति। तत्र चेत्थं प्रतिविधानम्—तत्र तावत् ब्रह्मविद्यासु सगुणनिर्गुणविभाग एव सुतराम- प्रामाणिकः। सर्वा अपि ब्रह्मविद्याः सगुणविषया एव; यतो ब्रह्म सगुणमेवेति श्रुत्यन्तसिद्धान्तः। अपिच "सदेव" इति श्रुतौ स्रक्ष्यमाणप्रपञ्चस्य सृष्टेः पूर्वमविभक्तनामरूपतया केवलमेकत्वमवधार्यते, न पराभिमतसजातीयविजातीयस्वगतभेदविधुरतया। वाक्यशेषे च सैव श्रुतिः "तद्धेदं तर्ह्यव्याकृतमासीत् तन्ना-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मरूपाभ्यां व्यक्रियत" इति तमेवार्थं प्रपञ्चयति । यद्येषा रीतिर्नाङ्गीक्रियते, तर्हि तदा तदभिमतमायाया अपि प्रविलयापत्त्या मायोपहिताद् ब्रह्मणः प्रपञ्चसृष्टिरिति तदीयः सिद्धान्तो व्याकुप्येत् ।

तदेवं बहुप्रमाणसिद्धे शुद्धसत्त्वे तथा धर्मभूतज्ञाने जीवेषु ईश्वरे च विषये अजडत्वं लक्षणं भवति । अजडत्वं जडभिन्नत्वम् । तच्च स्वप्रकाशत्वरूपम् । इतरानपेक्षप्रकाशत्वमिति यावत् । तर्हि संसारिणामस्माकं कुतो न प्रकाशत इति चेत् कर्मावरणादिति ब्रूमः ॥ १ ॥

**अजडत्व शुद्धसत्त्व= नित्यविभूति, धर्मभूतज्ञान, जीव और ईश्वर में होता है । अजडता स्वप्रकाशता है ॥१ ॥**

**पराक्त्वे सत्यजडता लक्ष्म प्रथमयोर्मतम् ।**
**परस्मै भासमानत्वं पराक्त्वमिति गद्यते[1] ॥ २ ॥**

तत्र शुद्धसत्त्वधर्मभूतज्ञानयोः साधारणं लक्षणमाह—पराक्त्व इति । पराक्त्वं च परस्मा एव भासमानत्वम् । शुद्धसत्त्वं धर्मभूतज्ञानं च न स्वं स्वयमधिगन्तुं प्रभवतः । किंतु परस्मै पुरुषायैव प्रकाशेते । अजडत्वं च तयोर्ज्ञानरूपत्वात् । तथाच श्रुतिः शुद्धसत्त्वमधिकृत्य श्रूयते—"किमात्मिकैषा भगवतो व्यक्तिः ? यदात्मको भगवान् । किमात्मको भगवान् ? ज्ञानात्मकः" इति । परस्मै भासमानत्वमित्यत्र सर्वं वाक्यं सावधारणमिति न्यायेन परस्मा एव भासमानत्वमित्यर्थो विवक्षितः । अतो जीवेश्वरयोः परस्मै स्वस्मै च भासमानसोर्नातिप्रसङ्गः ॥ २ ॥

**अजडता सहित पराक्त्व प्रथम दो अर्थात् शुद्धसत्त्व और धर्मभूतज्ञान का लक्षण कहा गया है । पराक्त्व दूसरे के लिए भासमानता है ॥२ ॥**

**सत्त्वैकमूर्तिको देशः शुद्धसत्त्वमचेतनम् ।**
**परिच्छिन्नमधो देशेऽनन्तमूर्ध्वप्रदेशतः ॥ ३ ॥**

शुद्धसत्त्वपदार्थमाह—सत्त्वैकेति । एकशब्दः केवलपरः । रजस्तमोभ्याममिश्रितकेवलसत्त्वगुणक इत्यर्थः । पराक्त्वादचेतनम् । चेतनं नाम चैतन्यगुणकं वस्तु । शुद्धसत्त्वस्य ज्ञानरूपत्वेऽपि ज्ञानानाश्रयत्वादचेतनत्वम् । अधोदेशे परि-

१. मनुगद्यते B. कथ्यते C.

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

च्छिन्नम्। "तमसः परस्तात्" इत्यादिश्रुतिभिस्तमस ऊर्ध्वमिति वर्णनादधः प्रदेशे तमसा परिच्छिन्नम्। ऊर्ध्वप्रदेशे तु अपरिच्छिन्नम्। शुद्धसत्त्वस्योपरिष्टात् कस्यापि देशादेरभावात् तत्र परिच्छेदरहितमिति भावः ॥ ३ ॥

शुद्धसत्त्व रजस् और तमस् से अमिश्रित मात्र सत्त्व-गुण से युक्त अचेतन पदार्थ है। शुद्धसत्त्व ज्ञानरूप होने पर भी ज्ञान का आश्रय न होने से अचेतन है। यह अधोदेश में परिच्छिन्न = सीमित तथा ऊर्ध्वप्रदेश में अपरिच्छिन्न = असीमित अर्थात् अनन्त रूप से रहता है ॥३ ॥

**स्वयंप्रकाशरूपेयं पञ्चोपनिषदात्मिका।**
**विष्णोर्नित्यविभूतिः स्यान्नित्यमानन्दरूपिणी ॥ ४ ॥**

स्वयंप्रकाशरूपेति। नित्यविभूतिरिति निर्देशानुरोधेन स्त्रीलिङ्गनिर्देशः। स्वप्रकाशे जडपदार्थैरिवेतरानपेक्षणात् स्वयंप्रकाशरूपेयम्। तच्च किंद्रव्यात्मकमित्यत्राह—पञ्चोपनिषदिति। पञ्चोपनिषन्मन्त्रप्रतिपादितपराकाशाद्यप्राकृतपञ्चभूतमयी। सा चेश्वरादीनां परमपदनिलयानां तत्तदिच्छानुरोधेन शरीरेन्द्रियविषयादिरूपेणावतिष्ठते। तत्रेयान् विशेषः—यत्प्राकृतानि भूतानि महदादिभ्य उत्पद्यन्ते। अप्राकृतानि तु न तथा। तानि स्वत एव प्रतिष्ठतानि। अतो नित्यानि। तर्हि, "अशरीरं वाव सन्तम्" इत्यादिश्रुतयः शरीररहितस्यैव कथं मोक्षमभिदधतीति चेत्, इत्थम्—कर्मकृतशरीरराहितस्यैव तत्र विवक्षा। परमपदनिलयानां तु शरीरमकर्मकृतमित्यदोषः। विष्णोरिति विभूतावन्वेति। विष्णोः शेषभूता नित्यविभूतिरित्यर्थः। आन्दरूपिणीति;

"तत्रानन्दमया भोगा लोकाश्चानन्दलक्षणाः।"

"आनन्दं नाम तं लोकं परमानन्दलक्षणम्।"

इत्याद्युपबृंहणात् नित्यविभूतिरान्दैकरूपेत्यर्थः ॥ ४ ॥

शुद्धसत्त्व ही नित्यविभूति है अतएव यह स्वयंप्रकाशरूपा पञ्चोपनिषदात्मिका = पञ्चोपनिषद् में प्रतिपादित पराकाशादिरूप अप्राकृतपञ्चभूतमयी, नित्य आनन्दरूपिणी भगवान् विष्णु की नित्यविभूति है- यही शुद्धसत्त्व पदार्थ है ॥४ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सेयं विभूतिरीशस्य नित्यमुक्तात्मनामपि ।
भोग्यभोगोपकरणभोगस्थानमयी मता ॥ ५ ॥

सेयं विभूतिरिति; नित्यविभूतिरित्यर्थः । तस्या विविधरूपतामाह—भोग्येति; भोगकर्मभोगसाधनभोगाधिकरणदेशमयीत्यर्थः । मतेति; प्रामाणिकग्रन्थेष्वित्यर्थः ॥ ५ ॥

यह नित्यविभूति ईश्वर, नित्यजीव तथा मुक्तजीव की भोग्य, भोगोपकरण और भोगस्थानरूपिणी कही गई है ॥५ ॥

भोग्यमीश्वरदेहादि द्वितीयं चन्दनादिकम् ।
भोगस्थानं तु माणिक्यगोपुरादिकमुच्यते ॥ ६ ॥

भोग्यादीन् निर्दिशति—भोग्यमिति । ईश्वरस्य देहादि भोग्यमित्यर्थः । ईश्वरदिव्यमङ्गलविग्रहोऽन्येषां नित्यसूरीणामिवेश्वरस्यापि भोग्यो भवति । यदाहुः—"मूर्तं ब्रह्म ततोऽपि तत्प्रियतरं रूपं यदत्यचद्भुतम्" इति । भोगोपकरणमाह—चन्दनादिकमिति । नित्यविभूतावाप्राकृतचन्दनादिकं शास्त्रसिद्धम् । भौगस्थानान्याह—माणिक्येति । माणिक्यमयं गोपुरप्रासादवितर्दिकादिकं भोगस्थानमित्यर्थः ॥ ६ ॥

ईश्वर की देह आदि **भोग्य** हैं, चन्दनादि **भोगोपकरण** हैं तथा माणिक्यमय गोपुरप्रासाद, वतर्दिका आदि **भोगस्थान** हैं ॥६ ॥

देहा ईश्वरनित्यानां नित्येच्छाकल्पिता हरेः ।
मुक्तानां तु शरीरादिस्तत्संकल्पकृतो मतः ॥ ७ ॥

तत्र भोग्यभूतदेहे विशेषमाह—देहा इति । ईश्वरस्य नित्यानां च देहो हरेर्नित्येच्छापरिकल्पितः । मुक्तानां तु ईश्वरेच्छाधीनस्वेच्छाकल्पितः । भगवदाज्ञामनुरुन्धाना यथा यथा भूत्वा भगवन्तं तत्कल्याणगुणांश्चानुबुभूषन्ति तथा तथा स्वदेहं परिगृह्णन्तीत्यर्थः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ईश्वर और नित्यजीव की देह हरि की नित्य इच्छा से कल्पित होती हैं, किन्तु मुक्त जीव के शरीर आदि ईश्वरेच्छाधीन स्वेच्छा से कल्पित होते हैं ॥७ ॥

**श्रीपतेर्व्यूहविभवार्चावतारतया सतः ।**
**अप्राकृतशरीराणि प्रतिष्ठानन्तरं हरेः ॥ ८ ॥**
**प्रसादोन्मुखतापत्तौ प्रकटानि भवन्ति हि ।**
**तच्च प्रकटनं तस्य संकल्पाधीनमीर्यते ॥ ९ ॥**

श्रीपतेरिति । व्यूहाः वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्याश्चत्वारः । विभवाः रामकृष्णादिबहुभेदाः । अर्चाः श्रीरङ्गादिदिव्यदेशेषु प्रतिमारूपाः । एवं व्यूहाद्यात्मना वर्तमानस्य भगवतः श्रीपतेः शरीराणि दिव्यमङ्गलविग्रहाः अप्राकृतानि प्राकृतभिन्नानि शुद्धसत्त्वमयानि ज्ञातव्यानि । ननु व्यूहविभवानां सन्तु नामाप्राकृतविग्रहाः । अर्चारूपाणां तु विग्रहाः कथमप्राकृताः ? अर्चा हि प्राकृतलोहैः रजतकाञ्चनादिभिः शिल्पिभिनिर्मिता दृश्यन्ते । सन्ति च प्रतिमानिर्माणे तेषु तेषु शास्त्रेषु परिदृश्यमाना विधय इत्यत्र समाधानमाह—प्रतिष्ठानन्तरमिति । प्राकृतलोहनिर्मितानामप्यर्चाविग्रहाणां यथाशास्त्रं वैदिकतान्त्रिकमन्त्रैः प्रतिष्ठाकरणानन्तरं त एव विग्रहा अप्राकृततामापद्यन्ते इत्यर्थः । यथाहुः—"न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसंभवा" इति, "न भूतसंघसंस्थानो देहोऽस्य परमात्मनः" इति च ॥ ८ ॥

तत्र च हेतुः भगवत्प्रसादौन्मुख्यमेवेत्याह—प्रसादेति । महामन्त्रैः प्रतिष्ठाकरणे तादृशमन्त्रमहिम्ना भगवानाराधकस्य प्रसन्नो भूत्वा तत्र बिम्बे स्वसांनिध्यं कुरुते । तत्सांनिध्यसमय एव तद्बिम्बमप्यप्राकृत भवतीति यावत् । एष च महिमा मन्त्रबलाधीन इति न तत्र लेशतोऽपि कुचोदनाया अवकाशः । तदेवाह—तच्चेति । संकल्पाधीनमिति । मन्त्रविशेषैः प्रतिष्ठिते बिम्बे सांनिध्यं करवाणीति तस्यावितथः संकल्पः । अप्रतिहतसंकल्पे भगवति प्रसन्ने किं किं न संभाव्यत इत्यर्थः ॥ ९ ॥

भगवान् नारायण-श्रीपति के व्यूह, विभव तथा अर्चावताररूप शरीर= दिव्यमङ्गलविग्रह अप्राकृत= प्राकृतभिन्न शुद्धसत्त्वमय होते हैं । यद्यपि अर्चारूप विग्रह प्राकृत लोह, रजत, काञ्चन आदि से निर्मित होते हैं, तथापि उक्त अर्चाविग्रहों का यथाशास्त्र वैदिक-तान्त्रिक मन्त्रों द्वारा प्रतिष्ठाकरण

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

होने से वे ही विग्रह अप्राकृत हो जाते हैं, क्योंकि भगवान् तादृश मन्त्रों की महिमा से आराधक पर प्रसन्न होकर उस विग्रह-बिम्ब में प्रकट हो जाते हैं अथवा उसमें अपनी सन्निधि बना लेते हैं और वह प्रकटन= सान्निध्य उनका संकल्प कहा जाता है। भाव है कि अप्रतिहतसंकल्पवान् भगवान् के प्रसन्न होने पर क्या नहीं हो सकता है, सर्वसंभव होता है ॥८-९ ॥

प्राकृताप्राकृततनुसंसर्गः कथमित्यलम् ।
रामकृष्णवतारादौ दृष्टत्वात्तस्य भूयसा ॥ १० ॥

ननु भगवदर्चामूर्तेप्राकृतत्वे कथमस्याः प्राकृतलोकावतारः ? कथं वा प्राकृतैर्द्रव्यैः संसर्ग इत्याशङ्क्य समाधत्ते—प्राकृतेति । प्राकृताप्राकृतलोकयोरुभयोरपि भगवद्विभूतित्वात् यथा अखिलहेयप्रत्यनीककल्याणगुणैकतानस्य भगवतो रामकृष्णाद्यात्मना दोषबहुलप्राकृतलोकेऽप्यवतारः प्राकृतद्रव्यैश्च योग उपपद्यते तद्वदिति भावः ॥ १० ॥

यह प्रश्न है कि 'प्राकृत जगत् और अप्राकृत शरीर का संसर्ग कैसे संभव हो सकता है'? सर्वथा अनुचित है, क्योंकि ऐसा संसर्ग अनेक बार राम, कृष्ण के अवतार आदि में देखा गया है ॥१० ॥

औज्ज्वल्यादिगुणा ये[1] स्युर्दिव्यमङ्गलविग्रहे ।
हरेस्तांस्तु विजानीहि गद्यत्रयविचारतः ॥ ११ ॥

भगवत्स्वरूपस्य यथा ज्ञानशक्त्याद्यसंख्यातकल्याणगुणाश्रयत्वं तथा शुभाश्रयस्य तद्दिव्यमङ्गलविग्रहस्याप्यनन्तगुणाश्रयत्वं शुद्धसत्त्वमयत्वात् प्रामाणिकमुपपद्यत इत्याह—औज्ज्वल्यादीति । आदिपदेन सौगन्ध्यसौकुमार्यलावण्यादि- संग्रहः । गद्यत्रयेति; श्रीभगवद्रामानुजी भगवदनुसंधानपरे पृथुगद्यमितगद्यश्रीवैकुण्ठगद्यसंघटिते गद्यत्रयाख्यग्रन्थ इत्यर्थः । विचारत इत्यनेन तद्भाष्यार्थावगमोऽपि विवक्षितः ।

---

१. ये तु A.C.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

हरि के दिव्य-मङ्गलविग्रह में जो औज्ज्वल्यादि गुण हैं उनको तो भगवान् श्री रामानुजाचार्य द्वारा प्रणीत गद्यत्रय ग्रन्थ से हृदयंगम करना चाहिए ॥११ ॥

मुक्तानामशरीरत्ववचनं यत्तु दृश्यते ।
तत्कर्मकृतशारीरसंबन्धाभावगोचरम् ॥ १२ ॥

"अशरीरं वाव सन्तम्" इति श्रुतिर्मुक्तौ देहाभावं ब्रवीतीति तद्विरोध इत्यत्राह—मुक्तानामिति । सशरीरत्वाशरीरत्वपरयोः श्रुत्योः सगुणनिर्गुणश्रुत्योरिवशरीरस्य कर्मकृतत्वाकर्मकृतत्वाभ्यां विरोधः परिहरणीय इति भावः ॥ १२ ॥

'मुक्तजीव अशरीर होते हैं- यह जो वचन कहा जाता है, इसका तात्पर्य यह है कि उन मुक्तजीवों का कर्मकृत शरीर से सम्बन्ध नहीं होता है ॥१२ ॥

निरूपयन्ति श्रीनाथदिव्यमङ्गलविग्रहम् ।
पुराणोक्तक्रमादस्मादाद्या वेदान्तदेशिका[1] ॥ १३ ॥

तथाहि—

"चेतश्चक्रति चेतनासिरमतिस्तत्संवृतिर्मालिका
भूतानि स्वगुणैरहंकृतियुगं शङ्खेन शाङ्र्गायते ।
बाणाः खानि दशापि कौस्तुभमणिर्जीवः प्रधानं पुनः
श्रीवत्सं कमलापते तव गदामाहुर्महान्तं बुधाः ॥"

इति ।

पुराणरत्नास्त्रभूषणाध्यायोक्तप्रकारेण भगवतो दिव्यमङ्गलविग्रहमनुसंधत्ते—निरूपयन्तीति । श्रीनाथेत्यनेन "उभयाधिष्ठानं चैकं शेषित्वम्" इति न्यायेन दिव्यदंपतिशेषित्वमुक्तं भवति । निरूपणप्रकारमेवाह—चेत इति । चक्रति चक्रमिवाचरति । चेतना ज्ञानम् । असिः खड्गरूपतामपद्यते । अमतिः, अज्ञानम् । तत्संवृतिः; तस्य खड्गस्य संवृतिः आवरणभूतः कोशः । भूतानि आकाशादीनि

१. अस्मदाद्यवेदान्तदेशिकाः A.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पञ्चभूतानि पञ्च तन्मात्राणि च स्वगुणैः शब्दस्पर्शादिभिः सह मालिका भवति; यस्या भूतमालेत्यपि प्रसिद्धिर्लोके। अहंकृतियुगं सात्त्विकतामसाहंकारद्वयं शङ्खेन सह शाङ्‍र्गं भवति। सात्त्विकाहंकारः शङ्खः, तामसाहंकारश्च शाङ्‍र्गं भवतीत्यर्थः। शङ्खस्य सात्त्विकत्वादेव ध्रुवानुग्रहे भगवता ध्रुवस्य ज्ञानोदयहेतुभूतं शङ्खसंमार्जन- मुक्तं पुराणे। दशापि खानि ज्ञानकर्मेन्द्रियाणि बाणा भवन्ति। जीवः जीवसमष्टिरूपं चेतनतत्त्वं कौस्तुभः कौस्तुभमणिः। प्रधानं प्रकृतिः पुनः श्रीवत्सं भवति। बुधाः महान्तं महत्तत्त्वं तव गदामाहुरिति श्लोकार्थः॥ १३॥

हमारे आद्य वेदान्ताचार्य पुराणोक्त क्रम से भगवान् नारायण श्रीनाथ के दिव्य-मङ्गलविग्रह का निरूपण इस प्रकार करते हैं-

'हे कमलापति !हमारा यह चित्त आपका चक्र है, हमारी चेतना अर्थात् ज्ञान आपकी असि अर्थात् खड्ग है, अमति = अज्ञान उसकी संवृति = कोश अथवा मियान है, अपने गुणों सहित पंचमहाभूत आपका पुष्पहार हैं जिसको भूतमाला भी कहा जाता है, सात्त्विक और तामसरूप द्विविध अहंकार आपके पाञ्चजन्य शङ्ख के साथ शार्ङ्ग धनुष है, दस इन्द्रियां बाणं हैं, जीव आपकी कौस्तुभमणि है, प्रधान-प्रकृति आपका श्रीवत्स है, तथा महत् आपकी गदा है।' इत्यादि ॥१३॥

त्रिपाद्विभूतिवैकुण्ठपरव्योमादिशब्दिता।
विभूतिरियमीशस्य महती सुमहीयते॥ १४॥

नित्यविभूतेर्नामान्तराण्याह—त्रिपादिति। त्रिपाद्विभूतिरिति, श्रीवैकुण्ठ- मिति, परव्योम चेति शब्दभागिनी, ईशस्य सर्वशेषिणो भगवत इयं विभूतिः महती लीलाविभूत्यपेक्षयात्यन्तं महती सुतरां महीयते पूज्यते। मह पूजायामिति धातुः। "तद्विप्रासो विपन्यवो जागृवांसः समिन्धते" इत्युक्तरीत्या नित्यसूरिभिः सदा स्तूय- माना वर्तत इत्यर्थः॥ १४॥

यह नित्यविभूति त्रिपाद्-विभूति, श्रीवैकुण्ठ और परमव्योम आदि अनेक नामों से जानी जाती है। यह सर्वशेषी भगवान् नारायण की विभूति है, यह महती तथा सुतरां पूज्य है ॥१४॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

द्वादशावरणोपेतमनेकशतगोपुरम् ।
वैकुण्ठं नाम नगरमेतस्यां प्रविजृम्भते ॥ १५ ॥

तत्र नित्यविभूतौ दिव्यनगरमाह—द्वादशेति । तत्र नित्यविभूतौ द्वादशभिरावरणैः प्राकारैरावृतमनेकशतसंख्याकगोपुरविराजितं वैकुण्ठाख्यं श्रीवैकुण्ठनामकं दिव्यनगरमपि एतस्य भगवतो भोगार्थं विजृम्भते प्रकाशते ॥ १५ ॥

इस नित्यविभूति में बारह आवरणों प्राकारों से आवृत घिरा हुआ तथा अनेक सौ गोपुरों = अट्टालिकाओं से विभूषित 'वैकुण्ठ' नाम का नगर प्रकाशित है ॥१५ ॥

आनन्दनामकस्तत्र सुदिव्यंनिलयः स्फुटः ।
तत्र रत्नमयस्तम्भसहस्रा भासते सभा ॥ १६ ॥

श्रीवैकुण्ठनगरे भगवतो दिव्यमन्दिरादिकमाह—आनन्देति । तत्र नगरे आनन्दनामकः दिव्यनिलयः स्फुटः स्वयंप्रकाशो वर्तते । तत्र दिव्यनिलये सभामण्डपः रत्नमयैः स्तम्भसहस्रैरन्वितो भासते ।

उस वैकुण्ठ में 'आनन्द' नामक भगवान् का दिव्य मन्दिर है, जो स्फुट अर्थात् स्वयंप्रकाश है तथा उसमें सहस्रों मणिजटित स्तम्भों = खम्भों से अन्वित-भूषित एक 'सभाभवन' सुशोभित है ॥१६ ॥

अनन्तस्तत्र च फणामणितेजोविराजितः ।
तस्मिन् धर्मादिसहितसिंहासनमुपस्थितम् ॥ १७ ॥

तत्र च दिव्यसभामण्डपे फणमणितेजोभिर्विशेषभास्वरः अनन्तः सिंहासनमुद्धरन्नास्ते । तस्य दिव्यमहामणिमण्डपस्थनित्यसूरिसभायामास्तरणभूतस्यानन्तस्य सेवामाह—अनन्त इति । तत्र च सभायाम् । फणामणीनां सहस्रसंख्यस्फटास्थरत्नानां तेजसा कान्त्या विराजितोऽनन्तः तदाख्यया प्रसिद्धो भगवत्पारिषदेषु प्रधानभूतः राजति विद्योतते । अनन्तस्य बहुधा भगवत्सेवाप्रकारो वर्णितः स्तोत्ररत्ने—

"तया सहासीनमनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि ।
फणामणिव्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरिते जनैः ॥"

इति । तस्मिन् अनन्ते; अधिकरणे सप्तमी । तद्धारितं दिव्यं सिंहासनमुपस्थितं वर्तत इत्यर्थः । तस्यसिंहासनस्य पादानाह—धर्मादीति । धर्मज्ञानवैराग्यैश्वर्याख्याश्चत्वारः पादास्तस्य । तैः पादैः सहितं सिंहासनं वर्तत इत्यर्थः ।

उस सभाभवन में सहस्र-फणामणियों के तेज अथवा कान्ति से विराजित 'अनन्त' नाम वाले भगवान् के पार्षदप्रधान विराजमान हैं, उन अनन्त द्वारा धारित वहाँ एक दिव्य 'सिंहासन' है जिसके धर्म, ज्ञान, वैराग्य और ऐश्वर्य- ये चार पाद हैं ॥१७ ॥

**तत्र चामरवद्धस्तैर्विमलादिभिरर्चितम् ।**
**पद्ममष्टदलं भाति तत्र शेषोऽस्ति धीमयः ॥ १८ ॥**

तस्य सिंहासनस्य मध्ये पद्मासनमाह—तत्रेति । तत्र; सिंहासने । चामरवीजनेन भगवत्कैंकर्यप्रसिताभिर्विमलादिभिर्दिव्यपरिचारिकाभिरञ्चितमलंकृतमष्टदलयुक्तं पद्मं भाति विमलादयश्चाष्टौ परिचारिकाः परिगण्यन्ते भगवच्छास्त्रे । तासां नामानि यथा—विमला, उत्कर्षणी, ज्ञानाख्या, क्रिया, योगाख्या, प्रभ्वी, सत्या, ईशाना चेति । एताश्च पद्मासनस्याग्नेयाद्यष्टदिग्दलेषु प्रतिष्ठिता वेदितव्याः । तत्रेति । अष्टदलपद्मे धीमयः ज्ञानस्वरूपः शेषोऽस्ति दिव्य पर्यङ्करूपेण वर्तते । भगवच्छेषतैकरसत्वात् भगवत्पारार्थ्यैकरूपप्रवृत्तिनिमित्तानुगुणां शेषाख्यां बिभ्रदयं स्वयंप्रकाशत्वरूपज्ञानस्वरूपोऽपि विशिष्य पञ्चविधज्योतिः सिद्धान्तप्रवर्तकतया ज्ञानप्रकर्षवानिति धीमयत्वमस्येति मन्तव्यम् । १८ ॥

उस सिंहासन के मध्य एक अष्टदलयुक्त 'पद्मासन' है जो कि अपने-अपने हाथ में चँवर ली हुईं विमला आदि अष्ट परिचारिकाओं द्वारा अर्चित है, उस पद्मासन पर ज्ञानस्वरूप एक 'शेष' है जो कि पर्यङ्करूप है ॥१८ ॥

**तत्रानन्दमयः साक्षात्सर्ववाचामगोचरः ।**
**अद्भुतज्योतिराकारो भाति नारायणात्मना ॥ १९ ॥**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अनन्तरं शेषपर्यङ्कासीनं भगवन्तं निर्दिशति—तत्रेति। तत्र; शेषपर्यङ्के। आनन्दमय:; मानुषानन्दादिप्रजापत्यानन्दपर्यन्तशतगुणितोत्तरानन्दादप्यतिशयितानन्दरूप:। साक्षात्; विगलितनिखिलकर्मबन्धस्याविर्भूतस्वस्वरूपस्यात्मन: प्रत्यक्ष- वेद्य:। सर्ववाचाम "यतो वाचो निवर्तन्ते" इत्युक्तरीत्या ब्रह्मादीनां सर्वदेवानामपि वाचामविषय:। अद्भुतज्योति:, "परं ज्योतिरुपसंपद्य," "न तत्र सूर्यो भाति न चन्द्रतारकम्" इत्यादि श्रुत्युक्तरीत्या युगपदुदितकोटिकोटिसूर्यलावण्यज्योतिराकार:। नारायणत्मनेति सदात्मपरब्रह्मादिशब्दानां सामान्यविशेषन्यायेन नारायणे पर्यवसानमभिप्रेत्यात्र देवताविशेषनिर्देश:। अनेन मुक्तप्राप्यं निर्विशेषं परं ब्रह्मान्यत्। उपसनागोचर आविद्यक: सगुणो नारायणोऽन्य इति परेषां मते तत्क्रतुन्यायविरोधरूपमनौचित्यमपि सूचितम्। ब्रह्मणि सगुणनिर्गुणविभाग एव प्रमाणं नास्ति। तथा कृत्वा चिन्तायामपि सगुणब्रह्मोपासकस्य सगुणब्रह्मप्राप्तिरेवोचिता, न निर्गुणब्रह्मप्राप्तिरिति युक्तम्।

उस शेषपर्यङ्क पर आनन्दमय, साक्षात, ब्रह्मादि सभी देवताओं की वाणी से भी अगोचर, नारायणस्वरूप, युगपद्-उदित-कोटिकोटिसूर्यलावण्य से अद्भुत ज्योतिरूप विभासित अथवा प्रकाशित रहता है ॥१९॥

इति वेदान्तकारिकावल्यां नित्यविभूतिनिरूपणं षष्ठं प्रकरणम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ७. धर्मभूतज्ञाननिरूपणम्

[१]धर्मो भवति यज्ज्ञानं प्रभा दीपे यथात्मनोः।
तद्धर्मभूतविज्ञानं नित्यं नित्येश्वरेषु तत्॥ १ ॥

अथ धर्मभूतज्ञानं निरूपयितुमुपक्रमते—धर्म इति। यथा प्रभा दीपधर्मतया भाति, तथा ज्ञानमप्यात्मधर्मतया भातीत्यर्थः। ज्ञानस्वरूपस्यात्मनो व्यवच्छेदाय धर्म इति विशेषणम्। धर्मीभवतीति पाठे धर्मो भवतीत्यर्थे, "कृभ्वस्तियोगे संपद्य-कर्तरि च्विः" इति च्विप्रत्ययः। अभूततद्भावश्चात्र यथावदनवस्थितोऽपि शब्द-साधुत्वसंपत्तये यथाकथंचिन्निर्वाह्यः। अत्रायमाशयः—ज्ञानं द्विविधं धर्मिभूतं धर्मभूतं चेति। तत्राद्यं जीवा ईश्वरश्च। अन्त्यं तेषां गुणभूतं मतिबुद्ध्यनुभूत्यादि-पदवाच्यम्। अवभासत्वमुभयानुगतं प्रवृत्तिनिमित्तम्। अर्थप्रकाशत्वं तु धर्मभूत-ज्ञानस्य। ज्ञानस्वरूपस्यात्मनो ज्ञानमेव कथं गुणो भवितुमर्हतीति विशये दीपप्रभादृष्टान्तेन समाधानमुक्तं भवति। यथा तेजोरूपाया एव दीपज्वालायास्ते-जोरूपा प्रभा गुणो भवति तथेति।

ननु ज्ञानं नामाद्रव्यं द्रव्याश्रितो गुण इति प्रसिद्धिः। तथा सति कथात्मनो द्रव्यस्याद्रव्यात्मकज्ञानरूपत्वमिति चेत्, ज्ञानस्य द्रव्यात्मकत्वादिति ब्रूमः। आगमोऽपि हि "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मणो ज्ञानस्वरूपतामाह। ननु तत्र ज्ञानशब्दे अन्तोदात्तबलादर्श आद्यचि ज्ञानवत्त्वमेवार्थं इति चेत्; तन्न, "विज्ञानमा-नन्दं ब्रह्म" इति श्रुत्यन्तरानुगुण्येनात्रापि बाहुलकादन्तोदात्ततामाश्रित्य ज्ञानस्वरूप-त्वस्यैव वक्तव्यत्वात्। नन्वेवमप्यागमबलात् ज्ञानरूपगुण एव ब्रह्मास्तु। तथा च केवलमनुभूतिरेव ब्रह्म। अनुभूतेश्च गुणत्वात् तत्र ज्ञानान्तरासंभवः, गुणे गुणान-ङ्गीकारात्। न हि रूपादौ गुणे गुणान्तरं रूपाद्युपलभामहे इति चेत्, अत्रेत्थं वक्त-व्यम्—यदि नैयायिकपक्षपातेनाद्रव्यं गुण इति पक्षमवलम्ब्य वितर्क्यते, तदा गुणस्याद्रव्यस्य कंचिदाश्रयमन्तरावस्थितिरपि न दृष्टचरेति ज्ञानरूपस्य ब्रह्मणः कश्चिदाश्रयोऽभ्युपगन्तव्यो भवति। यदि "निराधारं निराश्रयम्" इत्याद्यागमबला-दाश्रयमन्तरापि तद्वर्तत इत्यभ्युपगम्यते, तर्हि काममागमबलादेव तस्य ज्ञानगुणक-

---

१. धर्मीभवति—A.B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त्वमप्यभ्युपगन्तव्यो भवति। यदि "निराधारं निराश्रयम्" इत्याद्यगमबलादगाश्रयमन्तरापि तद्वर्तत इत्यभ्युगम्यते, तर्हि काममागबलादेव तस्य ज्ञानगुणकत्वमप्युपगम्यताम्। अस्ति चायमागमः—"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिः।

इदमत्रावधेयम्—पदार्थजातं द्रव्यगुणकर्मसामान्याद्यात्मना विभजतां नैयायिकानां यथा गुणा अद्रव्यभूताः, न तथास्माकं सिद्धान्ते। यो यदाश्रित्य वर्तते, स तस्य गुण इति गुणलक्षणम्। स च क्वचिद् द्रव्यं भवति, यथा—दण्डः पुरुषस्य। क्वचिदद्रव्यं भवति, यथा—शुक्लादि रूपं पटस्य। तथा गुणगुणिनोः संबन्धोऽपि द्विविधः—पृथक्सिद्धसंबन्धः, गुणगुणिनोः सामानाधिकरण्यनिर्देशः, यथा—दण्डी पुरुष इति। अपृथक्सिद्धसंबन्धस्थले तु मत्वर्थप्रत्ययापेक्षां विनापि तयोः सामानाधिकरण्यम्, यथा—शुक्लः पटः, ब्राह्मणोऽयम्, पीनोऽयमित्यादि। अत्र शुक्लरूपपटयोः देहात्मनोश्चापृथक्सिद्धसंबन्धः। प्रकृते च ज्ञानब्रह्मणोरपृथक्सिद्धसंबन्धात् "विज्ञानं ब्रह्म" इति व्यवहार इत्येका गमनिका। तथा ह्याह सूत्रकारः—"तद्गुणसारत्वात् तद्व्यपदेशः" इति। स्वयंप्रकाशत्वरूपप्रवृत्तिनिमित्तपौष्कल्यात् तथा व्यवहार इत्यन्या गमनिकेति।

तत्र विशेषान्तरमाह—नित्यमिति। तत्; धर्मभूतं ज्ञानं नित्येषु ईश्वरे च नित्यम् उत्पादविनाशरहितम्। आह च श्रुतिर्धर्मभूतज्ञानस्य नित्यत्वम्; यथा—"न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति। उपबृंहणमपि—

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा॥"

इत्यादि। ईश्वरस्य नित्यसूरीणां च ज्ञानं सदा सर्वविषयावगाहीत्यर्थः॥ १॥

जैसे दीपक का प्रकाश उसका धर्म होता है वैसे ही आत्मा का ज्ञान उसका धर्म होता है, यही **धर्मभूतज्ञान** कहलाता है। यह धर्मभूतज्ञान नित्य होता है और नित्यजीव तथा ईश्वर में रहता है॥१॥

**बद्धेषु तत्तिरोभूतं मुक्तेषु प्राक्तिरोहितम्।**
**संकोचनविकासाभ्यां नाशोत्पत्तिविपाकभाक्॥ २॥**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बद्धमुक्तज्ञानयोर्विशेषमाह—बद्धेष्विति । तत् नित्यमपि ज्ञानम् । बद्धेषु कर्मबद्धेषु जीवेषु । तिरोभूतम् आवृतं भवति । अतः स्वतः सर्वविषयवगाहस्वभावमपि तत् संसृतिदशायां कुण्ठितप्रसरं भवतीत्यर्थः । मुक्तेषु तु प्राक् मुक्तेः प्राक् तिरोभूतम् । मुक्त्यनन्तरं तु नित्येश्वराणामिव सर्वतः प्रसरमित्यर्थः,"परमं साम्यमुपैति" इति श्रुतेः । संसृतिदशायां संकोचविकासाभ्यां नाशोत्पादव्यवहार इत्यर्थः । एवं चात्मधर्मभूतज्ञाने संकोचविकासाभ्युपगमात् तस्यैव विकारित्वम्, न त्वात्मन इति तस्याविकारित्वश्रुत्या न विरोधः । केवलसंविदेवात्मेति वादिनां मते तु ज्ञानेऽभ्युपगतो विकार आत्मन्येव पर्यवस्यंस्तस्याविकारित्वबोधन्या श्रुत्या विरुध्येत । नित्यस्यापि ज्ञानस्य विकारित्वं तु प्रमाणप्रतिपन्नतयाभ्युपगम्यत इति भावः । ज्ञानस्य संकोच एव नाशः, विकास एव चोत्पत्तिरिति व्यवह्रियते ॥ २ ॥

यह ज्ञान बद्धजीव में तिरोभूत रहता है तथा मुक्तजीव में मुक्ति से पूर्व तिरोभूत रहता है । इस ज्ञान का संकोच और विकास क्रमशः नाश और उत्पत्ति कहलाता है ॥२ ॥

**संकोच इन्द्रियद्वारा ज्ञानं संकोच्यते यदि ।**
**विकास इन्द्रियद्वारा ज्ञानप्रसरणाद्भवेत् ॥ ३ ॥**

ज्ञानाख्यं द्रव्यमिन्द्रियद्वारा निर्गत्य विषयसंनिधानमाप्नुवद्विषयावभासं जनयति । यदा इन्द्रियद्वारा निर्गमने तत् संकोच्यते तदा तस्य संकोचो भवति । यदा तु प्रसरणमापद्यते तदा विकासो भवतीत्यर्थः ॥ ३ ॥

जब यह ज्ञान इन्द्रियों द्वारा संकुचित होता है तो संकोच कहलाता है । जब यही ज्ञान इन्द्रियों द्वारा प्रसार प्राप्त करता तो विकास कहलाता है ॥३ ॥

**स्वप्रकाशं स्वतो मानमेतदित्यत्र संमतम् ।**
**स्वान्यनिर्वाहकत्वेन दीपवत्स्वप्रकाशता ॥ ४ ॥**

एवं ज्ञानस्य नित्यत्वं प्रतिपाद्य स्वयंप्रकाशत्वं स्वतः प्रामाण्यं च प्रतिपादयति—स्वप्रकाशमिति । स्वयंप्रकाशमित्यर्थः । 'घटमहं वेद्मि' इत्युपलम्भे ज्ञेयज्ञातृज्ञानरूपत्रिपुटीप्रतिभासः सर्वानुभवसिद्धः । तत्र ज्ञेयनिष्ठविषयतानिरूपकं

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वेद्मीति विदधात्वर्थज्ञानमिति सुप्रसिद्धम्। ज्ञातृज्ञाननिष्ठविषयतानिरूपकं ज्ञानं किंरूपमिति विवेचनीयम्। उभयोर्मानसाध्यक्षविषयत्वात् मानसमध्यक्षमिति नैयायिकाः। ज्ञातुरात्मनोऽहंप्रत्ययविषयत्वाद् भानम्; ज्ञानस्य तु प्राकट्यलिङ्गकेनानुमानेन भानमिति भाट्टाः। तन्मतं निरस्यन् स्वसिद्धान्तमाह—स्वप्रकाशमिति। स्वः स्वनिष्ठः प्रकाशो विषयता यस्येति व्युत्पत्त्या प्रकाशशब्दस्य स्वनिरूपितविषयताकमित्यर्थः फलितः। एवं च ज्ञानं स्वनिरूपितविषयताकमित्युक्ते एकमेव ज्ञानं विषयो विषयि चेति पर्यवसानात् स्वगोचरज्ञानान्तरानपेक्षं ज्ञानं स्वयमेव भासत इत्यर्थः पर्यवसन्नः। ज्ञानं स्वयंप्रकाशमपि न सर्वदा सर्वस्य भासते; किंतु विषयप्रकाशनवेलायां ज्ञातुरात्मन एव। कालान्तरीयपुरुषान्तरीयज्ञानं तु स्मृत्या, अनुमानेन च ज्ञायत इति सिद्धान्तः। एवं च "यानुभूतिरजामेया" इतीष्टसिद्धिकारवचनेऽप्यजत्वांशे न विप्रतिपत्तिः, ज्ञानस्य नित्यत्वात्। अमेयत्वांशेऽपि विषयप्रकाशनवेलायां ज्ञातुः स्वयंप्रकाशत्वात् ज्ञानान्तरामेयेत्यर्थकरणे न विप्रतिपत्तिरिति ज्ञेयम्।

एतच्च ज्ञानं स्वतो मानं स्वतः प्रमाणमित्यत्र सिद्धान्ते संमतम्। अयं भावः—ज्ञानस्य प्रामाण्यं विषयास्तित्वेन व्यवस्थाप्यम्। अप्रामाण्यं च विषयनास्तित्वेन। तच्च विषयास्तित्वं स्वत एव प्रतीयते। 'घटोऽस्ति' इति ज्ञाने घटास्तित्वरूपं प्रामाण्यं तेनैव ज्ञानेन प्रतीयते। अतः स्वतः प्रमाणमिदं ज्ञानम्। यत्र तु शुक्तौ रजतप्रतीतिः, तत्रापि रजतास्तित्वमेव प्रतीयते, न पुनस्तन्नास्तित्वम्। तन्नास्तित्वं तु बाधकेन ज्ञानेन। अतः सर्वेषां ज्ञानानां प्रामाण्यं स्वतः, अप्रामाण्यं तु परत इति। एतदप्रामाण्यमपि न धर्म्यंशे, किंतु धर्मांशे। 'इदं रजतम्' इत्यत्र इदमंशे न भ्रान्तिः। किंतु तत्प्रकारांशे। प्रकारश्च द्वेधा—स्वरूपनिरूपकः, निरूपितस्वरूपविशेषकश्चेति। 'इदं रजतम्'इत्यत्राद्यम्, 'पीतः शङ्खः' इत्यत्रान्त्यमिति विवेकः। स्वयमेव स्वस्य प्रकाशकं कथं भवेदिति शङ्कायां दृष्टान्तप्रदर्शनेन समाधत्ते—स्वान्येति। दीपो यथा स्वान्यद्वस्तु प्रकाशयन् स्वात्मानमपि प्रकाशयति तथा ज्ञानमपि स्वेतरत् गृह्णत् स्वात्मानमपि गृह्णातीत्यर्थः। यदाहुः—"ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ते तेजसो यथा" इति ॥ ४ ॥

रामानुजवेदान्त में धर्मभूतज्ञान स्वप्रकाश और स्वतःप्रमाण होता है। जैसे दीपक अपने को तथा अपने से अन्य पदार्थों को प्रकाशित करता है वैसे

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ही धर्मभूतज्ञान स्वयं का तथा स्वभिन्न अन्य पदार्थों का अनुभव करता है- यही इसकी स्वप्रकाशता है ॥४ ॥

तमोविशेषसांनिध्याज्ज्ञानं स्वापे तिरोहितम् ।
द्रव्यत्वमस्य ज्ञानस्य प्रभावद्गुणतापि च ॥ ५ ॥

यदि ज्ञानं नित्यं स्वयंप्रकाशं च तदा तस्य सदातनत्वात् सर्वदापि भासेत; कुतः स्वापादौ न भासत इत्याशङ्कायामाह—तमोविशेषेति । अतिशयिततमोगुणेनावरणात् स्वापादौ न प्रकाशते । तमोऽपगमे च भासत इत्यर्थः । एतच्च स्वापे ज्ञानं न भासत इति सिद्धान्तपक्षमङ्गीकृत्य । केचित्तु तदाप्यान्तरवस्त्ववगाहि स्फुरणमस्त्येव । बहिर्विषयावगाहि ज्ञानं परं नास्तीति वदन्ति । संकोचविकासरूपविकारभागित्वात् सिद्धं ज्ञानद्रव्यत्वं धर्मभूतत्वेऽपि न विहन्यत इत्याह—द्रव्यत्वमिति । न हि परेषामिवस्माकं मते गुणत्वं द्रव्यत्वविरोधि, मणिद्युमण्यादिप्रभायामुभयोरपि दृष्टत्वात् । नन्वेवं परस्परव्यधिकरणयोः धर्मयोरेकत्र समावेशात्सांकर्यप्रसङ्गः । द्रव्यत्वं विहाय गुणत्वं रूपादौ,गुणत्वं विहाय द्रव्यत्वं घटादौ । उभयोर्धर्मभूतज्ञाने समावेशादिति चेत्, नैवम् । सांकर्यं हि जातित्वे बाधकमिति परेषां मतम् । न वयं जातिमेवाभ्युपगच्छाम इति ॥ ५ ॥

यद्यपि धर्मभूतज्ञान नित्य और स्वप्रकाश है, तथापि यह तमोगुणविशेष के सान्निध्य से स्वाप = स्वप्न या निद्रा अवस्था में तिरोहित हो जाता है । यह ज्ञान सूर्य और उसके प्रकाश के समान द्रव्य है साथ ही गुण भी है ॥५ ॥

धीभेदाः सुखदुःखेच्छाद्वेषयत्ना न ते पृथक् ।
द्वेष्मीच्छामीति वादस्तु स्मरामीत्यादिवन्मतः ॥ ६ ॥

पराभिमतानां सुखदुःखेच्छादीनां पार्थक्यमाशङ्क्य समाधत्ते—धीभेदा इति । एवं च न तेषां पृथक् पदार्थगणनावसर इति भावः । यदि सुखादयो धीभेदाः, तदा कथं द्वेष्मीत्यनुभव इत्यत्राह—द्वेष्मीति । यथा स्मृतेः धीरूपत्वेऽपि स्मरामीत्यनुभवो लोकसिद्धः, तथा प्रकृतेऽपीति भावः ॥ ६ ॥

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

सुख, दु:ख, इच्छा, द्वेष, प्रयत्न आदि ज्ञान के ही भेद हैं, इससे पृथक् नहीं हैं। 'मैं द्वेष करता हूँ', 'मैं इच्छा करता हूँ'- इत्यादि प्रयोग 'मैं स्मरण करता हूँ' इत्यादि जैसे माने गये हैं ॥६ ॥

स्मृत्यादयो ज्ञानभेदा अनन्ता जीववृत्तयः ।
ज्ञानशक्त्योर्विततयोऽनन्ताश्च भगवद्गुणाः ॥ ७ ॥

ते च धीभेदा अनन्ता इत्याह—स्मृत्यादय इति । व्यवसायमोहरत्यादय आदिपदार्थः । एते च जीवधर्माः । अथेश्वरधर्मानाह—ज्ञानेति । ज्ञानविततयः सौशील्यवात्सल्यादयः । शक्तिविततयः स्थैर्यशौर्यादय इति विवेकः ॥ ७ ॥

यो स्मृति, व्यवसाय, मोह, रति आदि ज्ञान के भेद, जो कि जीववृत्ति, जीव के धर्म हैं, अनन्त हैं । भगवान् के अनन्त गुण उनके ज्ञान और शक्ति के विस्तृत रूप हैं; ज्ञान के विस्तृत रूप सौशील्य, वात्सल्य आदि हैं, इसी प्रकार शक्ति के विस्तृत रूप स्थैर्य, शौर्य आदि हैं ॥ ७ ॥

गद्यत्रये महाचार्यैरयमर्थ उदीरितः ।
तत्तत्स्वरूपविज्ञानं तद्भाष्येणावगम्यते ॥ ८ ॥

धीविततिभूतानाममीषां विस्तरजिज्ञासून् प्रत्याह—गद्यत्रयेति । पृथुगद्य-श्रीरङ्गगद्यवैकुण्ठगद्याख्यगद्यत्रयग्रन्थ इत्यर्थः । महाचार्यैः, श्रीवैष्णवसंप्रदायकुलगुरुभिर्भगवद्रामानुजमुनिभिः । अयमर्थः—ज्ञानशक्तिविततिभूता भगवद्गुणा इति विषयः । उदीरितः, विस्पष्टं प्रपञ्चितः । तत्तस्वरूपेति; सौशील्यवात्सल्यादिगुणस्वरूपेत्यर्थः । तद्भाष्येण गद्यत्रयभाष्येण श्रीवेदान्तदेशिकविरचितेन रहस्यरक्षाख्येन । महतो मन्दैः सह नीरन्ध्रेण संश्लेषः सौशील्यम् । स्वरक्षणीयतयाभिमतेषु दोषतिरस्कारिणी प्रीतिर्वात्सल्यमित्यादिरीत्येति भावः ॥ ८ ॥

उक्त पदार्थ महाचार्य रामानुज के 'गद्यत्रय' में कहे गये हैं । अतएव तद्-तद् गुणों का स्वरूप 'गद्यत्रय' के वेदान्तदेशिककृत 'रहस्यरक्षा' नामक भाष्य में कहा गया है वहाँ द्रष्टव्य है ॥८ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**भक्तिप्रपत्तिसुप्रीत ईश्वरो मुक्तिदायकः।**
**अतो भक्तिप्रपत्ती हि मुक्तौ परमकारणम्॥ ९॥**

अथ मोक्षकारणमाह—भक्तीति। "स्नेहपूर्वमनुसन्धानं भक्तिरित्यभिधीयते" इत्यादिलक्षिता महनीयविषये निरतिशयप्रीतिरूपा भक्तिरत्र विवक्षिता। प्रपत्तिः, शरणागतिः;

"अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्।
तदेकोपायता याच्ञा प्रपत्तिः शरणागतिः॥"

इत्यादिलक्षणलक्षिता। एते भक्तिप्रपत्ती एव मोक्षसाधिके, नान्यत्किंचिदित्याहाहिर्बुध्नियसंहितायां भगवान्,

"भक्त्या परमया वापि प्रपत्त्या वा महामते।
प्राप्योहं नान्यथा प्राप्यो मम कैंकर्यलिप्सुभिः॥"

इति। तदाह सुप्रीत ईश्वरो मुक्तिदायक इति। अनेन भक्तिप्रपत्त्योरपि व्याजमात्रत्वमेव। सुप्रसन्नो भगवानेक एव मोक्षसाधनमिति परमसिद्धान्तत्वमुक्तं भवति। मुक्तौ परमकारणमिति; भगवत्प्रसादजननद्वारा मुख्यकारणमित्यर्थः। एतेन तत्त्वमस्यादिमहावाक्यार्थज्ञानमेव मोक्षसाधनमिति परेषां मतं न सम्यगित्युक्तं भवति। तादृशवाक्यार्थज्ञाने सत्यपि मोक्षादृष्टेः श्रवणमननादिभिर्निर्धूतद्वैतवासनस्य शास्त्रजन्यः साक्षात्कारस्तथेत्यपि न सम्यक्। अन्योन्याश्रयबाधाददुष्टत्वात्॥ ९॥

**भगवान् सर्वेश्वर भक्त की भक्ति और प्रपत्ति से सुप्रसन्न होकर उसको मुक्ति प्रदान करते हैं, अतः भक्ति और प्रपत्ति ही मुक्ति का परम कारण है॥९॥**

**कर्मयोगज्ञानयोगौ भक्तौ[1] साधनमूचिरे।**
**फलाभिसंधिर्रहितं कर्माराधनमीशितुः॥ १०॥**

तर्हि कर्मयोगज्ञानयोगयोर्भगवदुपदिष्टयोः क उपयोग इत्याकाङ्क्षायामाह—कर्मेति। कर्मयोगज्ञानयोगयोर्भक्तियोगाङ्गत्त्वेन तत्र कीर्तनमित्यर्थः। तदुक्तं यामुनाचार्यैः;

---

१. भक्ति C

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"मध्यमे भगवत्तत्त्वयाथात्म्यावाप्तिसिद्धये ।
ज्ञानकर्माभिनिर्वर्त्यो भक्तियोगः प्रकीर्तितः ॥"

इति । कर्मयोगलक्षणमाह—फलेति । फलकामनारहितमीशितुरीश्वरस्य परमपुरुषस्याराधनं कर्म कर्मयोग इत्युच्यत इत्यर्थः । तत्स्वरूपं च निगमितं गीतार्थसंग्रहरक्षायां वेदान्तदेशिकैः, "स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणैः स्वाराधनैकप्रयोजनाय परमपुरुषः सर्वशेषी सर्वेश्वरः स्वयमेव स्वकर्माणि कारयति" इति । "कर्मयोगस्तपस्तीर्थदानयज्ञादिसेवनम्" इति च श्रीयामुनाचार्येण तन्निदर्शितम् । । १० ॥

**कर्मयोग और ज्ञानयोग भक्तियोग के साधन कहे गए हैं। फलकामनारहित, ईश्वर का कर्माराधन कर्मयोग कहा जाता है ॥१० ॥**

**विनिर्मलान्तःकरणे चिन्तनं ज्ञानयोगकः ।**
**साक्षादितरथा वापि भक्तौ कारणतानयोः ॥ ११ ॥**

ज्ञानयोगं लक्षयति—विनिर्मलेति । कर्मयोगपरिशीलनेन विमले अन्तःकरणे परिशुद्धस्वात्मस्वरूपस्य यच्चिन्तनं स ज्ञानयोग इत्यर्थः । तदुक्तं यामुनाचार्यैः,"ज्ञानयोगो जितस्वान्तैः परिशुद्धात्मनि स्थितिः" इति । एवं च ज्ञानयोगो नाम परिशुद्धजीवात्मोपासनामिति स्थितम् । कर्मज्ञानयोगयोर्भक्तियोगे इतिकर्तव्यतामाह—साक्षादिति । अनयोः; कर्मज्ञानयोगयोः । साक्षात्; इतराव्यवधानेन, कर्मयोगस्य ज्ञानयोगाव्यवधानेनेत्यर्थः । इतरथा वा व्यवधानेन वा ज्ञानयोगव्यवधानेन वा ज्ञानयोगस्य तु योगान्तराव्यवधानेन भक्तियोगे कारणत्वमित्यर्थः । अयमत्राशयः—भक्तियोगात्पूर्वमात्मावलोकनमपेक्षितम् । तच्च कर्मयोगस्यात्मतत्त्वज्ञानपूर्वकत्वात् तत्रात्मतत्त्वज्ञानपौष्कल्यतारतम्येन मध्ये ज्ञानयोगव्यवधानमन्तरापि क्वचिद्भवति । क्वचित्तु ज्ञानयोगद्वारेति ॥ ११ ॥

**कर्मयोग के परिशीलन से हुए विमल अन्तःकरण में परिशुद्ध आत्मस्वरूप का जो चिन्तन किया जाता है वह ज्ञानयोग कहलाता है । कर्मयोग और ज्ञानयोग-ये दोनों योग प्रत्यक्ष अथवा अप्रत्यक्ष रूप से भक्तियोग के साधन या कारण कहे गये हैं ॥११ ॥**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भक्तियोगोऽयमष्टाङ्गोऽविच्छिन्ना स्मृतिसंततिः ।
विवेकादिभिरुत्पाद्या दर्शनाकारतां गता ॥ १२ ॥

अनन्तरं भक्तियोगं लक्षयति—भक्तियोग इति । अष्टाङ्गः, यमनियमाद्यष्टाङ्गयुक्तः । तैलधारावदविच्छिन्नप्रसरा विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षरूपसहकारिकलापात्परिपोष्य दर्शनसमानाकारतां प्रापिता स्मृतिसंततिरेव भक्तियोग इत्यर्थः । वस्तुनः संततमव्यग्रमनसा चिन्तने तदेव वस्तु प्रत्यक्षदृष्टमिव भवतीत्यनुभवसिद्धम् ॥ १२ ॥

यमादि अष्टांग से युक्त, तैलधारावत् अविच्छिन्न, विवेकादि से परिपोष्य, साक्षात् दर्शनाकारता को प्राप्त स्मृतिसंसृति = सतत भगवद्-चिन्तन ही भक्तियोग कहलाता है ॥१२॥

तत्तच्छरीरावसानसमये परिणामिनी ।
सेयं साधनभक्तिः स्यात्प्रपत्त्यङ्गवती मता ॥ १३ ॥

स च भक्तियोगः तत्तच्छरीरावसानसमय एव परिपाकावस्थामुपेत्य साधकस्य संसिद्धा भवति । अतः सः शरीरावसानपर्यन्तमनुष्ठेयः । तथा च श्रुतिः; "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते" इति, "प्रायणान्तमोंकारमभिध्यायीत" इति च । सूत्रकारोऽपि, "आ प्रायणात्तत्रापि हि दृष्टम्" इत्याह । इयं पूर्वमुपवर्णिता साधनभक्तिरित्युच्यते । सा च प्रपत्यङ्गवती भवति । भक्तियोगविनिष्पत्तये भगवन्तमुद्दिश्य प्रपत्तिस्तदङ्गतया कर्तव्या । तेन च प्रसन्नो भगवान् प्रत्यूहान् निरस्य भक्तियोगं यथावत्परिपूर्णं करोति । तदाह भगवान्—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥"

इति । एवं च प्रपत्तिर्द्विधा—अङ्गप्रपत्तिः, अङ्गिप्रपत्तिश्चेति । भक्तियोगाङ्गतयानुष्ठिता अङ्गप्रपत्तिः, भक्तियोगानाधिकारिभिः स्वतन्त्रतयानुष्ठिता अङ्गिप्रपत्तिरिति विवेकः । तथा च अङ्गतया वा अङ्गितया वा यथाकथंचिद्भगवन्तं प्रपद्यैव मोक्षः प्राप्यः, नान्यथेत्युक्तं भवति । तथाचाह वेदान्ततत्त्वासारवर्षुको वेदान्तदेशिकः, "प्रपन्नादन्येषां न दिशति मुकुन्दो निजपदम्" इति ॥ १३ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

यह भक्तियोग देहावसान के समय ही परिपाकावस्था को प्राप्त हो साधक को संसिद्ध होता है अत: यह शरीरावसानपर्यन्त अनुष्ठेय है। इसको **साधन भक्ति** कहते हैं, प्रपत्ति इसका अङ्ग होती है ॥१३ ॥

फलभक्तिस्तु भगवदनुग्रहकृता भवेत्।
अत एव हरिः साक्षात्सिद्धोपायत्वमश्नुते ॥ १४ ॥

एवं भक्तियोगरूपां साधनभक्तिमुपपाद्य प्रपत्तियोगरूपां साध्यभक्तिमाह—फलभक्तिस्त्विति। भगवदनुग्रहेति;

"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥"

"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः।"

इत्यादि श्रुतिस्मृतिभिः यस्मिन् भगवदनुग्रहो भवति, स एव साध्यभक्तौ प्रवर्तते नान्य इत्यर्थः। अनेन प्रपन्नेषु भगवदनुग्रहपौष्कल्यमुक्तं भवति। साध्यभक्तेः प्राशस्त्यमप्यन्यत्रोपवर्णितम्, "साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी" इति। अत एव; प्रपन्नानामनन्यगतिकतया भगवत्कृपैकावलम्बितयैव। हरिः साक्षात् अव्यवधानेन सिद्धोपायो भवति। एतदुक्तं भवति उपायो द्विविधः— साध्योपायः, सिद्धोपायश्चेति। भक्तिप्रपत्ती साध्योपायौ। भगवान् सिद्धोपायः। भक्तिप्रपत्ती तु तत्प्रसादनैकपर्यवसायिन्याविति ॥ १४ ॥

फलभक्ति तो भगवदनुग्रह से ही प्राप्त होती है अतएव हरि सर्वशेषी सर्वेश्वर साक्षात् और सिद्ध उपाय कहे जाते हैं ॥१४ ॥

अन्तरादित्यविद्यादिभेदात्सा बहुधा मता।
सर्वापि ब्रह्मविद्येयं ब्रह्मप्राप्त्युपयोगिनी ॥ १५ ॥

भक्तियोगप्रसङ्गात् तत्संगतब्रह्मविद्याभेदानाह—अन्तरादित्येति। आदिपदात् दहरभूमन्यासविद्यादयो गृह्यन्ते। ताश्च विद्यास्त्रयस्त्रिंशदिति प्रायोवादः। वासुदेवादिव्यूहोपासनान्यपि गृह्यन्ते। तदाह—बहुधेति। सर्वापीयं ब्रह्मविद्या

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्रह्मप्राप्तावुपकरोति। अनेन न्यासविद्याया ब्रह्मविद्यात्वे संदिहानान् परान् प्रति तस्या विद्यान्तरसाम्यं प्रदर्शितं भवति। यदाहुः,

"यद्वा शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ्
न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात्।

आख्यारूपादिभेदः श्रुत इतरसमः किंच भिन्नोऽधिकारः
शीघ्रप्राप्त्यादिभिः स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम्॥"

इति॥ १५॥

भक्तियोगप्रसङ्गात् तत्संगत **ब्रह्मविद्या** अन्तरादित्यविद्या, न्यासविद्या आदि भेद से बहुत प्रकार की कही गई है। ये सभी ब्रह्मविद्याएँ ब्रह्मप्राप्ति में परम उपयोगी होती हैं॥१५॥

**न्यासविद्या प्रपत्तिः स्यादङ्गपञ्चकयोगिनी।**
**आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्॥ १६॥**

**रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा।**
**आत्मनिक्षेपकार्पण्ये अङ्गपञ्चकमीरितम्॥ १७॥**

एवं सामान्यतो ब्रह्मविद्या उपवर्ण्य न्यासविद्यायां विशेषमाह—न्यासविद्येति। प्रपत्तिरेव न्यास इत्युच्यते। "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इत्यादिश्रुतौ न्यासपदेन प्रपत्तिरेवोच्यते। उपासना यथा चाष्टाङ्गो योगः, तथा न्यासः पञ्चाङ्गो योग इत्युच्यते। तानि च पञ्चाङ्गानि लक्ष्मीतन्त्रोदितान्याह—आनुकूल्यस्येति। आनुकूल्यसंकल्पः, प्रातिकूल्यवर्जनम्, महाविश्वासः, गोप्तृत्ववरणम्, कार्पण्यमिति पञ्चाङ्गानि। आत्मनिक्षेपोऽङ्गी। एवं चाङ्गिना सह न्यासः षोढा परिगण्यते। यथा ध्यानेनाङ्गिना सहाष्टाङ्गो योग इति परिगणनम्। आनुकूल्यसंकल्पादीनां स्वरूपमुक्तं लक्ष्मीतन्त्रे—

"आनुकूल्यमिति प्रोक्तं सर्वभूतानुकूलता।
तथैव प्रातिकूल्यं च भूतेषु परिवर्जयेत्॥

त्यागो गर्वस्य कार्पण्यं श्रुतशीलादिजन्मनः।
अङ्गसामग्र्यसंपत्तेरशक्तेरपि कर्मणाम्॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

अधिकारस्य चासिद्धेर्देशकालगुणक्षयात् ।
उपाया नैव सिध्यन्ति ह्यपायबहुलास्तथा ॥

इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते ।
शक्तेः सूपसदत्वाच्च कृपायोगाच्च शाश्वतात् ॥

ईशेशितव्यसंबन्धादनिदंप्रथमादपि ।
रक्षिष्यत्यनुकूलान्न इति या सुदृढा मतिः ॥

स विश्वासो भवेच्छक्र सर्वदुष्कृतनाशनः ।
करुणावानपि व्यक्तं शक्तः स्वाम्यपि देहिनाम् ॥

अप्रार्थितो न गोपायेदिति तत्प्रार्थना मतिः ।
गोपायिता भवेत्येवं गोप्तृत्ववरणं स्मृतम् ॥

तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता ।
केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते ॥

निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः ।
संन्यासस्त्याग इत्युक्तः शरणागतिरित्यपि ॥"

इति ।

न्यासविद्या प्रपत्ति ही है । इसके पांच अङ्ग हैं- आनुकूल्यसंकल्प, प्रातिकूल्यवर्जन, रक्षिष्यतीति-महाविश्वास, गोप्तत्वरण और कार्पण्य । आत्मनिक्षेप अङ्गी है अतएव अङ्गी सहित पांच अङ्ग कहे गये हैं, फलतः न्यासविद्या छः अङ्गों वाली भी कहलाती है ॥१६-१७ ॥

**गुरूपसदनादेषा विज्ञातव्या मनीषिभिः ।**
**इयमुत्तरपूर्वाघाश्लेषनाशकृदुच्यते ॥ १८ ॥**

न्यासविद्यास्वरूपं तन्महिमा तदधिकार इत्यादिकं सर्वं गुरुमुखादवगन्तव्यमित्याह—गुरूपसदनादिति । मनीषिभिरित्यनेन सारासारविवेकज्ञानानामेवात्र प्रवृत्तिः संभवति, नान्येषां कौतस्कुतानामिति व्यञ्जितम् । भक्तियोगादस्य न्यासस्य वैशिष्ट्यमाह—इयमिति । उत्तराघाश्लेषः पूर्वाघनाशश्च न्यासमहिम्ना संभवतीत्यर्थः । तत्र भक्तियोगनिष्ठस्य प्रारब्धेतरपूर्वाघमेव नश्येत् प्रारब्धं तु भोगैकप्रणा-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

श्यम्। प्रपन्नविषये तु प्रारब्धमपि यथाभिलषितं सद्य एव प्रणश्यतीति विशेषः। तथोक्तम्—

"साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः।
साध्यभक्तिस्तथा सैव प्रपत्तिरिति गीयते॥

उपायो भक्तिरेवेति तत्प्राप्तौ या तु सा मतिः।
उपायभक्तिरेतस्याः पूर्वोक्तैव गरीयसी॥

उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशनी।
साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी।"

इति।

यह न्यासविद्या मनीषियों को गुरु के चरणों में बैठकर ही जाननी चाहिए। यह कहा जाता है कि यह विद्या = प्रपत्ति पूर्व पापों का विनाश करती है और उत्तर पापों से दूर रखती है॥१८॥

अपचारान्विना ब्रह्मविदां नास्या विरोधकृत्।
अन्योऽस्तीति महाचार्यशासनं व्यवसीयते॥ १९॥

प्रपन्नस्य मुक्तिप्राप्तौ न कोऽपि विघातको विना ब्रह्मविदपचारमित्याह—अपचारान्विनेति। ब्रह्मविदां भागवतानामपचारान् विना अस्याः प्रपत्तेः फलजनने न कोऽपि विरोधकृदिति महतामाचार्याणां शासनं निश्चीयते॥ १९॥

महान् आचार्यों का यह व्यवसाय = निर्णय है कि 'ब्रह्मवेत्ताओं = भागवतों के अपचारों के विना इस प्रपत्ति की फलोत्पत्ति में कोई अन्य विरोध करने वाला नहीं है'। भाव यह है कि प्रपन्न भक्तों की मुक्तिप्राप्ति में उनके अपचारों के अतिरिक्त अन्य कोई भी विघातक नहीं होता है॥१९॥

इति वेदान्तकारिकावल्यां धर्मभूतज्ञाननिरूपणं सप्तमं प्रकरणम्।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ८. जीवनिरूपणम्

अणुत्वे सति चैतन्यं जीवलक्षणमुच्यते।
स च देहेन्द्रियादिभ्यो विलक्षणतया मतः ॥ १ ॥

अथ क्रमप्राप्तं जीवनिरूपणमारभते—अणुत्व इति। अणुत्वमल्पपरिमाणवत्त्वम्। चैतन्यं ज्ञानाश्रयत्वम्। आभ्यां विशेषणाभ्यां क्रमेण ईश्वरस्य घटादेश्च व्यावृत्तिः। जीवस्याणुत्वं च श्रुत्यदिप्रमाणसिद्धम्। तथाच श्रूयते—"एषोऽणुरात्मा चेतसा वेदितव्यः"

"वालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥"

इति। सूत्रकारोऽपि "उत्क्रान्तिगत्यागत्यादीनाम्" इति सूत्रयंस्तस्याणुत्वं प्रसाधयति। एतेन जीवविभुत्ववादनिरासः। तथा तस्य ज्ञातृत्वमपि श्रूयते—"यो वेदेदं जिघ्राणीति स आत्मा" "जानात्येवायं पुरुषः" "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते"इत्यादि। सूत्रकारश्च "ज्ञोऽत एव" इति वदन् ज्ञातृत्वं तस्य प्रसाधयति। एतेन केवलज्ञप्तेरात्मत्ववादनिरासः। स च जीवो देहेन्द्रियादिभ्योऽन्यः, तेषां ज्ञातृत्वाद्ययोगात् ॥ १ ॥

अणुत्व और चैतन्य संयुक्तरूपेण जीव का लक्षण अभिलक्षित करते हैं अर्थात् जीव अणु और चैतन्यस्वरूप है। जीव देह, इन्द्रियों से सर्वथा भिन्न है ॥१ ॥

जीवस्यानेकविषयानुभवोऽणोरपि स्मृतः[१]।
यद्धर्मभूतविज्ञानव्याप्तिस्तत्रोपयोगिनी ॥ २ ॥

ननु जीवस्याणुत्वे कथं तस्य युगपदनेकविषयानुभवसंभवः? सुगन्धि चन्दनं हि नरो युगपदेव चक्षुभ्यां पश्यति। घ्राणेन जिघ्रति। हस्तेन स्पृशति। तदा च तद्गतरूपादीनुलभत इत्याशङ्क्य समाधत्ते—जीवस्येति। अणोरपि जीवस्य युग-

१. स्फुटः B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

पदनेकविषयानुभवः स्मृतः। यतस्तत्र धर्मभूतज्ञानस्य बहुत्र व्याप्तिरुपयोगिनी। तदाह "गुणाद्वा लोकवत्" इति। आत्माणुरपि स्वगुणेन ज्ञानेन सकलं देहं व्याप्यावतिष्ठते। यथा मणेरेकदेशवर्तिनोऽप्यालोकोऽनेकदेशव्यापी, तद्वत् हृदयकुहरान्तःस्थस्याप्यात्मनो ज्ञानं सकलं देहं व्याप्य वर्तत इति सूत्रार्थः॥ २॥

जीव यद्यपि अणुरूप है, फिर भी वह युगपद् अनेक विषयों का अनुभव करता है। इसमें उस जीव के धर्मभूतज्ञान की व्याप्ति ही उपयोगी होती है॥२॥

पूर्वानुभूतविषयप्रतिसंधानयोगतः।
नित्यः प्रतिशरीरं स भिन्नो भोक्त्रादिशब्दितः[1]॥ ३॥

अथ तस्य नित्यत्वं प्रसाधयति—पूर्वेति। पूर्वमनुभूतो यो विषयः देवदत्तादिः, तत्प्रतिसंधानयोगान्नित्य इत्यर्थः। उपदेशेभ्यो वत्सरेभ्यः पूर्वं काश्यां दृष्टस्य देवदत्तस्य संप्रति मद्रपुर्यां पुनर्दर्शने 'सोऽयं देवदत्तः' इति प्रतिसंधानं जायते। यद्यात्मा न नित्यःस्यात्, तदा तन्नोपपद्येत। अन्येन दृष्टस्यान्येन प्रतिसंधानं हि न संघटते। एतेन क्षणिकात्मवादो निरस्तः। जीवश्च प्रतिशरीरं भिन्नः। स्मृत्यनुभवादीनां व्यवस्था हि तदैव संगच्छते। यद्येक एवात्मा नानादेहेष्वभविष्यत् तदा येन पूर्वं घटो दृष्टः तस्यैव स्मृतिरुदेति नान्यस्येति व्यवस्था नाघटिष्यत। तदाह—"नानात्मानो व्यवस्थातः" इति। सांख्या अप्याहुः—

"जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव॥"

इति। अनेनैकजीववादो निरस्तः। तथा तत्रैव विशेषान्तरमाह—भोक्त्रादीति। "भोक्ता भोग्यं प्रेरितारं च मत्वा" "एष हि द्रष्टा श्रोता" इत्यादौ जीवस्य भोक्तृत्वं कण्ठोक्तमिति भावः। अनेन प्राकृतस्यान्तःकरणस्यैव भोक्तृत्वादि, नात्मन इति वादो निरस्तः॥ ३॥

---

१. शब्दतः B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जीव पूर्वानुभूत विषयों के प्रतिसंधान = प्रत्यभिज्ञान के योग से नित्य कहा जाता है। जीव प्रत्येक शरीर में भिन्न-भिन्न होता है और वह भोक्ता आदि शब्दों से कहा जाता है ॥३ ॥

प्रकृत्यपेक्षया देही देहः श्रीमदपेक्षया।
तस्य स्वयंप्रकाशत्वं प्रत्यक्षश्रुतिबोधितम्[1] ॥ ४ ॥

अथ सिद्धान्तिनां प्रतितन्त्रसिद्धान्तभूतं शरीरशरीरिभावमाह—प्रकृतीति। प्राकृतस्वदेहापेक्ष्यायं देही, तज्जन्यसुखदुःखादिभोगवान्। श्रीमन्तं भगवन्तमन्तर्यामिणमपेक्ष्यायं देहो भवति, तन्नियाम्यत्वतदाधारत्वादिशरीरलक्षणैर्लक्षितत्वात्। एवं च यथैकस्यैव देवदत्तस्य स्वपितरं प्रति पुत्रत्वं स्वपुत्रं प्रति पितृत्वं च न विरुध्यते, तथैकस्यैव जीवस्य स्वदेहं प्रति शरीरित्वमीश्वरं प्रति शरीरत्वं च न विरुध्यत इति भावः। स चायं जीवः स्वयंप्रकाशः, अनन्याधीनप्रकाश इत्यर्थः। स्वगोचरज्ञानान्तरमनपेक्ष्यापि स्वयमेव प्रकाशत इति यावत्। ननु तथा सति स किं सर्वदा भासते? ओमिति ब्रूमः। सुषुप्तावपि हिं'अहमहम्' इत्यात्मनः प्रतिभासः सर्वानुभवसिद्धः। कथं तर्हि सुप्तोत्थितस्य 'न किंचिद वेदिषम्' इति प्रतिसंधानमिति चेत्, बाह्यवस्तुविशेषावेदनादिति वेदितव्यम्। नन्वात्मापि नित्यः सर्वदा संनिहितः, ज्ञानमपि विभु नित्यं चाभ्युपगतम्; तथापि कुतः सुषुप्तौ बाह्यवास्त्ववेदनमिति चेत्, कथं वा जागरेऽपि सर्ववस्त्वग्रहणमिति पृच्छामः। यदीन्द्रियव्यापाराभावादिति, तदात्रापि तथेति तुल्यः समाधिः। जागरे कतिपयबाह्यवस्तुग्रहणम्। सुषुप्तौ तु तदपि नास्तीति परं विशेषः। ननु किमनेन प्रयासशतोपपादनीयेन जीवस्वयंप्रकाशत्वेन? तदेव- मास्त्वित्यत्राह—प्रत्यक्षश्रुतिबोधितमिति। "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इत्यादिप्रत्यक्षश्रुत्यवगतमित्यर्थः ॥ ४ ॥

वह जीव प्रकृति की अपेक्षा से देही = शरीरी तथा श्रीपति भगवान् की अपेक्षा से देह = शरीर कहा जाता है। वह जीव स्वयंप्रकाश है- ऐसा प्रत्यक्ष श्रुतियों से ज्ञात है ॥४ ॥

---

१. चेदितम् B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

देशान्तरफलादीनामुपलब्धिरणोरपि ।
[1]कर्मजन्याददृष्टाप्यविज्ञानादिति संजगुः ॥ ५ ॥

ननु कथं तर्हि सौभरिप्रभृतीनामनेकशरीरपरिग्रहेण भिन्नभिन्नदेशेषु सुखाद्युपलम्भः; आत्मना ह्यणुनैकस्मिन्नेव शरीरे संनिहितेन भाव्यम्, न सर्वत्र; शरीरान्तरेष्वात्माभावे च कथं तत्रत्यसुखाद्युपलम्भसंभव इत्यत्राह—देशान्तरेति । उपलब्धिः; अनुभवः । कर्मजन्यात् अदृष्टप्राप्याच्च विज्ञानादिति शब्दार्थः । अयं भावः—यद्यप्यणोर्जीवस्य नानाशरीरसंबन्धो न संभवति, तथापि तद्धर्मभूतस्य ज्ञानस्य विभुनस्तावत्पर्यन्तप्रसरात् तत्संबन्धोऽस्तीति तत्रत्यसुखोपलब्धिसंभवः । कथं तर्हि सर्वेषां पुंसां न तथा प्रसर इति चेत्, अदृष्टविशेषाभावादित्युच्यते । अदृष्टं चास्माकं मत ईश्वरप्रीत्याद्यात्मकमेव । तच्चादृष्टं तत्तत्पुरुषीयकर्मविशेषतारतम्याधीनमिति नातिप्रसङ्ग इति ॥ ५ ॥

जीव यद्यपि अणु है, फिर भी वह भिन्न-भिन्न देशों में भिन्न-भिन्न विषयों का एक साथ अनुभव करता है, इस विशेष अनुभव में उसका कर्मजन्य और अदृष्ट-प्राप्य धर्मभूतज्ञान कारण होता है- ऐसा विद्वान् कहते हैं ॥५ ॥

बद्धो मुक्तो नित्य इति जीवः स त्रिविधो मतः ।
ब्रह्मादिस्तम्बपर्यन्ता[2] बद्धाः संसारयोगिनः ॥ ६ ॥

बद्धो मुक्त इत्यादि निगदव्याख्यातम् । स्तम्बः सूक्ष्मः कीटविशेषः ॥ ६ ॥

वह जीव तीन प्रकार का होता है- बद्ध, मुक्त और नित्य । ब्रह्मा से लेकर कीट तक संसार से संयुक्त बद्ध जीव होते हैं ॥६ ॥

त्रैवर्गिकार्थनिष्णाता बुभुक्षव[3] उदाहृताः ।
अर्थकामपरास्तत्र स्वदेहात्माभिमानिनः[4] ॥ ७ ॥

---

१. कर्मजन्याददृष्टाख्य A.D.
२. कीटपर्यन्ता A.D.
३. बुभुत्सवः A.D.
४. अभिमानकाः B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

बुभुक्षुमुमुक्षुभेदेन बद्धजीवानां द्वैविध्यमभिप्रेत्यादौ बुभुक्षून् निरूपयति—त्रैवर्गिकेति। धर्मार्थकामास्त्रिवर्गः; तद्रूपेऽर्थ विषये निष्णातास्तत्परा बुभुक्षव इत्यर्थः। ते च द्विधा—अर्थकामपराः, धर्मपराश्चेति। ये स्वदेहे प्राकृतदेह एवात्माभिमानेन ऐहिकसुखाभिलाषेण तदुपभोगसाधनशरीरपोषणायार्थान् कामांस्वाभिलषन्ति ते अर्थकामपराः ॥ ७ ॥

बुभुक्षु और मुमुक्षु भेद से बद्ध जीव दो प्रकार के होते हैं। धर्म, अर्थ और काम-त्रिवर्गरूप विषयों में जो निष्णात = तत्पर होते हैं वे **बुभुक्षु** कहे जाते हैं। बुभुक्षु दो प्रकार के होते हैं- अर्थकामपर और धर्मपर। इनमें जो स्वदेह= प्राकृत देह में ही आत्माभिमान करके ऐहिक सुख की अभिलाषा से उसके उपभोग के साधन शरीर के पोषण के लिए अर्थ और काम की अभिलाषा करते हैं वे **अर्थकामपर** होते हैं ॥७ ॥

**ते तु धर्मपरास्तत्र यागाद्यर्थानुषङ्गिणः।**
**धर्मस्त्वलौकिकश्रेयःसाधनं चोदनोदितम् ॥ ८ ॥**

धर्मपरानाह—ते त्विति। ये तु देहातिरिक्तात्मनोऽलौकिकपारत्रिकश्रेयस्कामास्तत्साधनानि यागादिकर्माण्यारचयन्ति ते धर्मपरा इत्यर्थः। प्रसङ्गात् धर्मलक्षणमाह—धर्मस्त्विति। अत्र "चोदनालक्षणोऽर्थो धर्मः" इति जैमिनीयं सूत्रं विवक्षितम्। चोदनोदितमित्यनेन चोदनालक्षण इति, अलौकिकश्रेयःसाधनमित्यनेनार्थ इति च पदं विवृतं भवति ॥ ८ ॥

जो तो यागादि कर्मों का आचरण करते हैं वे **धर्मपर** कहलाते हैं। **धर्म** वह है जो प्रेरणादायी विधि-वाक्य द्वारा प्रतिपादित होता है और अलौकिक श्रेयस् का साधन कहलाता है ॥८ ॥

**रुद्राद्याराधनपरा अन्यदेवपरा मताः।**
**आर्तो जिज्ञासुरर्थार्थीत्येवं भगवताः स्मृताः ॥ ९ ॥**

धर्मपरेष्वेव देवतान्तरपरत्वेन भगवत्परत्वेन च द्वैविध्यमभिप्रयन्नाद्यानाह—रुद्रेत्यादि। रुद्रादीन् देवान् भगवच्छरीरत्वेन स्वातन्त्र्येण वाभिमत्य ये आराधयन्ति, ते देवतान्तरपराः। भगवत्परानाह—आर्त इति। आर्तः; अनुभूतभ्रष्टै-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

श्वर्यकामः। अर्थार्थी; अननुभूतापूर्वैश्वर्यकामः। उभयोरेतयोरैश्वर्यार्थित्वाविशेषेऽपि मुखभेदेन पृथगुक्तिः। जिज्ञासुः; प्रकृतिवियुक्तात्मस्वरूपानुभवेच्छुः। ज्ञानमेवास्य स्वरूपमिति तदिच्छोर्जिज्ञासुत्वम्। एते सर्वेऽपि स्वस्वाभिलषितसिद्ध्यर्थं देवतान्तरपरित्यागेन भगवदेकध्यानपरा इति तेषां भागवतत्वम्। अत्र

"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥"

इति भगवद्गीतावचनमनुसंधेयम्। तत्र हि देवतान्तरपरित्यागेन भगवत्परा हि सुकृतिन उक्ताः।

अन्य देवपर और विष्णुपर भेद से धर्मपर जीव दो प्रकार के होते हैं। जो रुद्र आदि देवताओं की आराधना करते हैं वे **अन्य देवपर** होते हैं, किन्तु जो मात्र भगवान् विष्णु की भक्ति करती है वे **विष्णुपर** अथवा भागवत कहलाते हैं। भागवत तीन प्रकार के होते हैं- आर्त, जिज्ञासु और अर्थार्थी॥९॥

**मुमुक्षूणां च कैवल्यपराणां लक्ष्म कथ्यते।**
**प्रकृतेस्तु वियुक्तस्य स्वात्मनोऽनुभवः परम्॥ १०॥**

अत्र केचित् सिद्धान्त्येकदेशिनो मुमुक्षून् परममुक्तिपरत्वेन कैवल्याख्यमुक्तिपरत्वेन च द्वेधा विभज्य वर्णयन्ति। तन्न युक्तमित्यभिप्रयंस्तान् प्रत्येकं लक्षयितुमुपक्रमते—मुमुक्षूणामिति। प्रथमं सूचीकटाहन्यायेन कैवल्यपरानाह—कैवल्यपराणामिति। प्रकृतेः सकाशात् विमुक्तस्यस्वात्मनोऽनुभवपराणामित्यर्थः। केवलस्य इतरसंसर्गरहितस्य भावो हि कैवल्यम्। प्रकृतिवियुक्तस्वात्मानुभवपरः केवल इति फलितम्॥ १०॥

कैवल्यपर और मोक्षपर भेद से मुमुक्षु जीव दो प्रकार के होते हैं। कैवल्यपर मुमुक्षु जीवों का लक्षण कहते हैं- प्रकृति से वियुक्त, मात्र स्वात्मानुभव में लीन **कैवल्यपर** मुमुक्षु होता है॥१०॥

**कैवल्यमर्चिर्मार्गेण गत्वापि परमं पदम्।**
**रमणत्यक्तपत्नीवत् क्वचित्कोणेऽवतिष्ठते॥ ११॥**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

कैवल्यमिति पूर्वेणान्वेति। ते च केवलाः केन मार्गेण प्राकृतलोकान्निर्गच्छन्ति ? कुत्र स्थित्वा स्वात्मानमनुभवन्तीत्यत्राह—अर्चिर्मार्गेणेति । अर्चिरादिमार्गेण गत्वा परमपदं प्राप्नुवन्ति। परं तु परमपदं प्राप्तानां परब्रह्मानुभवस्य शास्त्रसिद्धत्वात् तद्विधुरास्ते परमपद एव कुत्रचित्कोणे लब्धास्पदा यथा पतिपरित्यक्ताः साध्व्यः पातिव्रत्यमनुपालयन्त्यः पतिसांनिध्यानन्दानुभवं विहायावतिष्ठन्ते, तथैतेऽपि परब्रह्मानन्दानुभवं विना वर्तन्त इत्यर्थः ॥ ११ ॥

कैवल्यपर जीव अर्चिमार्ग से परम पद पाकर भी किसी कोने में अवस्थित रहता है जैसे पतिपरित्यक्ता साध्वी पातिव्रत्य धर्म का पालन करती हुई पतिसान्निध्य सुख को छोड़कर दिन व्यतीत करती है। भाव है कि यह जीव परब्रह्मानन्द के अनुभव के विना ही अवस्थित रहता है ॥११ ॥

कैवल्यमेतत्केषांचिदार्याणामेव संमतम्।
अस्मदार्यास्तु[1] कैवल्यं न मन्यन्त इति स्थितम्[2] ।१२।

एष च कैवल्याख्यो मोक्षः परमसिद्धान्तिनामनभिमतमित्याह—कैवल्यमिति। अर्चिरादिमार्गेण परमपदं प्राप्तस्य परब्रह्मानन्दानुभवस्यावश्यंभावित्वात् तत्र तद्वैधुर्येण स्वात्ममात्रानुभवः सुतारामसंभावितः। "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" इति हि श्रूयते। तत्र काम्यन्त इति कामा इति व्युत्पत्त्या कामपदेनानन्दादयो ब्रह्मगुणा उच्यन्ते। अतः कैवल्याख्यो मोक्षो नास्तीत्यर्थः। यदि परेषां जीवन्मुक्तव्यवहारवत् मुक्तिकल्पतया तत्र गौणो मुक्तिव्यवहारस्तदा कामं व्यवह्रियताम्। ननु केवलात्मोपासकानां तत्क्रतुनयात् स्वात्मानुभव एव फलं भवितुमर्हति; ते च केन मार्गेण निर्गच्छन्ति ? कुत्र वावस्थितिस्तेषामितिचेत्, येन केनापि मार्गेण निर्गच्छन्तु। यत्र कुत्र वा प्रकृतिमण्डल एव तिष्ठन्तु। न त्वर्चिरादिना निर्गमः, न वा परमपदावस्थितिस्तेषामिति सिद्धान्तः ॥ १२ ॥

अतएव हमारे कुछ आचार्यों को ही यह कैवल्य-स्थिति स्वीकार्य है, हमारे गुरुजन कैवल्य को मुक्ति नहीं मानते हैं- यह भाव है ॥१२ ॥

---

१. आद्यास्तु A.D.
२. स्फुटम् C.D.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

[1]भक्ताः पूर्वोक्तभक्त्यैव मुक्तिसंप्राप्त्यपेक्षिणः ।
अपशूद्रनये भक्तौ शूद्रानधिकृतिः स्फुटा ॥ १३ ॥

अथ मोक्षपरानाह—भक्ता इति । पूर्वोक्तेति; धर्मभूतज्ञाननिरूपणप्रकरणोक्तरीत्येत्यर्थः । ये भक्तियोगेन मोक्षं प्राप्तुमिच्छन्ति ते भक्ताः । तत्र च भक्तियोगे त्रैवर्णिकानामेवाधिकारः, तस्य वैदिकमन्त्रकरणकत्वात् । न शूद्रस्य, तस्य वैदिकमन्त्रानधिकृतत्वात् । किंच भक्तियोगे हि वर्णाश्रमधर्मा इतिकर्तव्यतामापद्यन्ते । तदाह—"विहितत्वाच्चाश्रमकर्मापि" इति । आश्रमविधुराणामाश्रमकर्मप्रसक्त्यभावात् अङ्गाधिकाराभावात् नाङ्गिन्यधिकारः । एष च विषयो भगवद्भाष्यकारैर्निर्णीत इत्याह—अपशूद्रनय इति । प्रथमाध्यायतृतीयपादस्य नवमाधिकरण इत्यर्थः ॥१३ ॥

भक्त और प्रपन्न भेद से मोक्षपर मुमुक्षु जीव दो प्रकार के होते हैं। जो पूर्वोक्त भक्तियोग मात्र से ही मोक्षप्राप्ति की इच्छा करते हैं वे भक्त कहलाते हैं। ब्रह्मसूत्र के अपशूद्राधिकरण के अनुसार शूद्र भक्तियोग के अधिकारी नहीं है- यह स्पष्ट है ॥१३ ॥

साध्यसाधनभक्तिभ्यां भक्ताः स्युर्द्विविधा मताः ।
पराङ्कुशादिकानाद्यान् व्यासादीनपरान् विदुः ॥ १४ ॥

तत्र भक्तानां द्वैविध्यमाह—साध्येति । भक्तिर्द्विधा—साध्यभक्तिः, साधनभक्तिश्चेति । यत्रावस्थायां परिनिष्पन्नभक्तियोगैर्भगवदनुध्यानं स्वयंप्रयोजनतया परमस्वादुतया च निरन्तरमनुष्ठीयते, साधनं तु भगवानेवेति सुदृढो विश्वासः सा साध्यभक्तिः । प्रपत्तिरपि तथा गीयते । यदाहुः—

"साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः ।
साध्यभक्तिस्तथा सैवप्रपत्तिरिति गीयते ॥

उपायो भक्तिरेवेति तत्प्राप्तौ या तु सा मतिः ।
उपायभक्तिरेतस्याः पूर्वोक्तैव गरीयसी ॥"

इति । पराङ्कुशपरकालादयः साध्यभक्तिनिष्ठाः । ते हि परिनिष्पन्नपरभक्तियोगाः परमभक्तिमास्थिताः स्वयंप्रयोजनतया समाधिपरा भगवदनुभवैकपरा अवर्तन्त ।

---

१. शक्ताः B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

साधनभक्तिनिष्ठाः पराशरपाराशर्यादयः। ते हि यमनियमाद्यष्टाङ्गयोगनिरता आसन्। व्युत्थानकाले च शास्त्राणि प्राणैषुरिति विद्मः।

स्यादेतत्। भक्तियोगे त्रैवर्णिकानामेवाधिकार इति पूर्वस्मिन् श्लोके निर्णीतम्। अस्मिन श्लोके तु पराङ्कुशादयः साध्यभक्तिनिष्ठा इत्युच्यते। पराङ्कुशो हि तुरीयवर्णजन्मेति वदन्ति। तत्कथमिदं संगच्छतामित चेत्, अत्रेदं तत्त्वम्— नित्यसूरिष्वन्यतमावतारभूतः पराङ्कुशो न प्राकृतचतुर्थवर्णजतुल्यतया मन्तव्यः। स हि भगवद्भक्तिमहिमानं भगवदनुभवरसास्वादतत्त्वं च लोकानवबोधयितुं भूमावततीर्य परमभक्तिमन्वतिष्ठत्। नित्यसूरयोऽपि हि "तद्विप्रासो विपन्यवो जागृवांसः समिन्धते" इति श्रुत्या "बद्धाञ्जलिपुटा हृष्टाः" इत्यादिस्मृत्या च भगवद्ध्यानपरा इत्यवगम्यते। नित्यसूरित्वावस्थायां या भक्तिरनुष्ठिता, सैव पराङ्कुशावतारावस्थायामप्यन्वर्ततेति न किंचिदनुपपन्नम्। अन्यथा रामकृष्णाद्यात्मना क्षत्रियवंशेऽवतीर्णस्य भगवतो विष्णोर्ब्राह्मणोत्तमैर्महर्षिभिर्वन्द्यत्वं कथमिति पर्यनुयोगे किमुत्तरम्? किंच सर्वत्र भक्तियोगप्रारम्भ एव हि त्रैवर्णिकाधिकारनियमः। न तु तस्य साधितस्यानुवृत्तिदशायामपि। परिनिष्पन्नभक्तेरपि प्रारब्धकर्मवशात् तत्तद्देहावाप्तिवर्जनीया। तदात्वे च भगवदनुभवरूपफलभक्तेरनुवृत्तौ को निर्बन्धः? को वा वारयिता भवतुमर्हति? लोकोत्तरव्यक्तिविशेषभूततन्निदर्शनेन पामरेष्वन्यत्राप्यतिशङ्कामापाद्य वर्णाश्रमधर्मसंकरकरणे समुद्यमस्तु न केवलं स्वस्य, किंतु सर्वस्यापि लोकस्य महतेऽर्थायेति विभावनीयम्॥ १४॥

साध्यभक्ति और साधनभक्ति भेद से भक्त दो प्रकार के कहे गये हैं- साध्यभक्तिनिष्ठ और साधनभक्तिनिष्ठ। इनमें पराङ्कुश, परकाल आदि **साध्यभक्तिनिष्ठ** भक्त हैं तथा व्यासादि **साधनभक्तिनिष्ठ** भक्त कहे जाते हैं॥१४॥

**मुमुक्षवः प्रपन्नाश्चाकिंचन्यादिकयोगिनः।**
**त्रैवर्गिकपरा मोक्षपराश्चेति च ते द्विधा॥ १५॥**

तत्र साध्यभक्तिपरेषु मुमुक्षुषु विशेषमाह—मुमुक्षव इति। त एव प्रपन्ना इत्युच्यन्ते। ते च प्रपत्त्यङ्गभूताकिंचन्याद्यङ्गपञ्चकयोगिनः। प्रपन्नेष्वेव द्वैविध्यमाह—त्रैवर्गिकेति। धर्मार्थकामाख्यत्रिवर्गपराः, मोक्षपराश्चेति ते द्विधा भवन्ति॥ १५॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

मुमुक्षुओं के अन्तर्गत मोक्षपर जीवों में जो अकिंचन आदि पांच अङ्गों वाले प्रपत्तियोग से युक्त होते हैं वे प्रपन्न कहलाते हैं। त्रैवर्गिकपर = धर्म-अर्थ-काम-त्रिवर्गपर और मोक्षपर भेद से प्रपन्न दो प्रकारके होते हैं ॥१५॥

**धर्मार्थकामान् स्वाम्यर्थं येऽन्वतिष्ठंस्त आदिमाः।**
**सत्सङ्गादर्थवैराग्ये मुमुक्षायां कृतादराः॥ १६॥**

तत्र त्रिवर्गपरानाह—धर्मेति। स्वामिप्रतिमेकामेव फलमुद्दिश्य तत्साधनतया धर्मार्थकामान् भगवत्प्रपदनेन ये संपादयन्ति ते त्रिवर्गपरा इत्यर्थः। कर्मयोगिनः स्वयमेव धर्मार्थकामान् संपाद्य तैर्भगवन्तमारिराधयिषन्ति। त्रिवर्गपराः प्रपन्नास्तु तान् स्वयमेव संपादयितुमशक्नुवन्तस्तदर्थं भगवन्तं प्रपद्य तत्प्रसादेन तान् लब्ध्वा तैर्भगवदाराधनपरा इति विशेषः। मोक्षपरप्रपन्नाह—सत्सङ्गादिति। अर्थवैराग्य इत्यनेन तन्मूलधर्मकामवैराग्यमपि विवक्षितम्। धर्मपदेनात्र न नित्यनैमित्तिकर्माणि; किंतु तदतिरिक्तानि तपस्तीर्थदानयज्ञादीनि विवक्षितानि। अतो न नित्यनैमित्तिककर्मप्रहाणं प्रपन्नानामनुमन्यते। धर्मार्थकामवैराग्येण मोक्ष एव येषां त्वरातिशयः, तेऽत्र मोक्षपराः॥ १६॥

जो स्वामिप्रीतिमात्र को फल समझकर उनकी ही शरण आकर उनकी ही कृपा से धर्म, अर्थ और काम को प्राप्त करके उन्हीं त्रिवर्ग से भगवान् सर्वेश्वर की आराधना करते हैं वे त्रैवर्गिकपर प्रपन्न कहलाते हैं। जो सत्सङ्ग के कारण अर्थवैराग्य-तन्मूलधर्मकामवैराग्य में तथा मुमुक्षा में आदर रखते हैं वे मोक्षपर प्रपन्न कहे जाते हैं। मोक्षपर प्रपन्न वे होते हैं जिनका धर्म, अर्थ और काम के प्रति वैराग्य से मोक्ष ही त्वरातिशय होता है ॥१६॥

**[१]भगवद्भोगसंप्राप्त्यै महाचार्यं समाश्रिताः।**
**असामर्थ्येन भक्त्यादौ प्रपत्त्येकाश्रयाः परे॥ १७॥**

किंच भगवत्स्वरूपरूपगुणाद्यनुभवसंपादनाय सदाचार्यमुपसद्य तदपदिष्टभगवत्स्वरूपगुणविभवादयस्तादृशमनवधिकातिशयानन्दमयं भगवन्तं लब्धुं भक्तिरूपे साधनान्तरे स्वासामर्थ्येन ये भगवत्प्रपत्तिमेव साधनतयावलम्बन्ते ते मोक्षपराः प्रपन्ना इत्यर्थः॥ १७॥

---

१. भगवदनुबोध B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इसके अतिरिक्त भगवद्योग = भगवान् के रूप, गुण आदि के अनुभव की प्राप्ति हेतु महाचार्य = सदाचार्य-सद्गुरु की शरण ग्रहण कर उनके द्वारा उपदिष्ट भक्ति आदि साधन में अपनी असामर्थ्य के कारण जो भगवत्प्रपत्ति का ही साधनरूप से अवलम्बन करते हैं वे **मोक्षपर** प्रपन्न होते हैं- यह अर्थ है ॥१७ ॥

[1]सर्वाधिकारितां धीराः प्रपत्तेराचचक्षिरे ।
एकान्तिनः फलं मुक्त्या सहान्यद्य उशन्ति ते ॥ १८ ॥

भक्त्यपेक्षया प्रपत्तेर्विशेषमाह—सर्वेति । धीराः धीमन्तो मनीषिणः;प्रपत्तिः सर्वाधिकारा सर्वेषामपि वर्णानां तथा देवमनुजपशुपक्ष्यादिरूपाणां सर्वेषां प्राणिनामाधिकर्तुं योग्येत्याचक्षते । पुनश्च प्रपन्ना द्विधा—एकान्तिनः परमैकान्तिनश्चेति । तत्राद्यानाह—एकान्तिन इति । ये मोक्षेण सहान्यत् धनधान्यादिकं फलमिच्छन्तः प्रपत्तिमनुतिष्ठन्ति त एकान्तिन इत्यर्थः । चतुर्वर्गफलेच्छया ये देवतान्तरं परित्यज्य भगवन्तमेव प्रपद्यन्ते त इत्यर्थः । एकस्मिन् भगवत्येवान्तः फलप्रदत्वेन निश्चयो येषां त एकान्तिनः ।

"येत्वन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥"

इति भगवद्वचनानुसंधानेन भगवानेक एव सकलफलप्रदानसमर्थ इति निश्चयवन्त इत्यर्थः ॥ १८ ॥

विद्वान् प्रपत्ति के लिए सभी को अधिकारी कहते हैं । सभी वर्ण तथा देव-मनुष्य, पशु-पक्षी आदिरूप सभी प्राणी प्रपत्ति के लिए अधिकारी होते हैं- यह अर्थ है । पुनः, एकान्ती और परम-एकान्ती भेद से प्रपन्न दो प्रकार के होते हैं । जो मोक्ष के साथ अन्य धन-धान्यादिरूप फल की इच्छा करते हुए भगवत्प्रपत्ति का अनुष्ठान करते हैं वे **एकान्ती** प्रपन्न कहलाते हैं ॥१८ ॥

---

१. सर्वाधिकारतां B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

परमैकान्तिनस्त्वैच्छन् भगवत्प्रीतिमेव[1] ये।
प्रारब्धं कर्म भुक्त्वैव यो मोक्षमभिकाङ्क्षति ॥ १९ ॥
दृप्त आर्तस्तु संसारे वह्नाविव समुत्तपन्।
प्रपत्त्यनन्तरे काले यो मोक्षमभिकाङ्क्षति ॥ २० ॥

अथ परमैकान्तिन आह—परमेति। ये भगवत्प्रीतिमेकामेव फलतयोद्दिश्य भगवन्तं प्रपद्यन्ते, ते परमैकान्तिन इत्यर्थः। परमे सर्वोत्कृष्टे भगवत्प्रीतिरूपे फल एवैको मुख्योऽन्तो निश्चयो येषां ते परमैकान्तिनः। ते किल परब्रह्मानन्दानुभवरूपं मोक्षमपि फलतया नोद्दिशन्ति। किंतु भगवत्प्रीतिमेकामेव। अथ दृप्तार्तभेदेन तेषां द्वैविध्यमभिप्रेत्याद्यानाह—प्रारब्धमिति।

"दह्यमानेन्धनान्तःस्थो विष्फुरन्निव कीटकः।
अलब्धनिर्गमस्तिष्ठन्मध्ये मरणजन्मनोः ॥"

इत्युक्तरीत्या वह्नितप्तः कीट इव नितरां संतप्यमानमानसाः प्रपदनसमये प्रारब्धकर्मणामपि विनाशपूर्वकं सद्यो मुक्तिमभिलषन्तो ये प्रपद्यन्ते ते आर्तप्रपन्नाः। किंचित्कालपर्यन्तं प्रारब्धकर्मफलभोगमभ्युपगम्य तद्देहावसानसमय एव ये मुक्तिमभिलषन्ति ते दृप्तप्रपन्ना इत्युच्यन्त इति भावः ॥ १९-२० ॥

जो भगवत्प्रीति की ही इच्छा करते हुए भगवत्प्रपत्ति करते हैं वे **परम-एकान्ती** कहे जाते हैं।अथवा, परम = सर्वोत्कृष्ट भगवत्प्रीतिरूप फल में ही एक = मुख्य अन्त = निश्चय जिनका होता है वे **परम-एकान्ती** कहलाते हैं। वे परब्रह्मानन्दानुभवरूप मोक्ष भी नहीं चाहते हैं। दृप्त और आर्त भेद से परम-एकान्ती दो प्रकार के होते हैं। उनमें जो प्रारब्ध कर्म भोगकर ही मोक्ष की आकांक्षा करता है वह **दृप्त** कहलाता है। किन्तु जो अग्नि में तप्त कीट के समान संसाराग्नि में संतप्त होकर प्रपत्तिसमय में प्रारब्ध कर्म के भी विनाशपूर्वक सद्योमुक्ति की अभिलाषा करता है वह **आर्त** होता है ॥१९-२० ॥

---

१. भगवद्भक्तिमेव D.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

सत्सङ्गादिति सुश्लोकद्वयोक्तगतिमान्नरः[1] ।
आविर्भूतस्वस्वरूपो मुक्तो ब्रह्मानुभूतिभाक्[2] । २१ ॥

सत्सङ्गादिति । इदमत्र श्लोकद्वयम्—

"सत्सङ्गाद्भवनिःस्पृहो गुरुमुखाच्छ्रीशं प्रपद्यात्मवान्
प्रारब्धं परिभुज्य कर्मशकलं प्रक्षीणकर्मान्तरः ।
न्यासादेव निरङ्कुशेश्वरदयानिर्लूनमायान्वयो
हार्दानुग्रहलब्धमध्यधमनिद्वाराद्बहिर्निर्गतः ॥

मुक्तोऽर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दवातांशुमद्-
ग्लौविद्युद्वरुणेन्द्रधातृमहितः सीमान्तसिन्ध्वापलुतः ।
श्रीवैकुण्ठमुपेत्य नित्यमजडं तस्मिन् परब्रह्मणः
सायुज्यं समवाप्य नन्दति समं तेनैव धन्यः पुमान् ॥"

इति । अनेन मार्गेण गच्छन् नरः स्वयंप्रकाशरूपं स्वस्वरूपं प्राप्य ब्रह्मानुभवन् भवतीत्यर्थः । अत्राविर्भूतपदेन जीवस्य मुक्तौ नाभूतपूर्वं स्वरूपमुत्पद्यते । किंतु स्वाभाविकमपि मध्ये कर्मणा तिरोहितं स्वरूपमाविर्भवति । तदाह श्रुतिः—"परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति । सूत्रकारश्चाह—संपद्याविर्भावः स्वेन शब्दात्"इति ॥ २१ ॥

'सत्सङ्गाद्भवनिःस्पृहो-----' इत्यादि सुश्लोकद्वय में उक्त गति = मार्ग पर चलने वाला पुरुष स्वयंप्रकाशरूप स्वस्वरूप को प्राप्त कर ब्रह्मानुभूति का अनुभव करता है अतएव मुक्त हो जाता है ॥२१ ॥

मुक्तस्य भोगमात्रे तु साम्यं श्रुतिषु चोदितम् ।
स्वेच्छया सर्वलोकेषु संचारोऽस्य न रुध्यते ॥ २२ ॥

मुक्तौ ब्रह्मणा सहाभेदं जीवस्य केचिदाचक्षते । तन्निरासार्थं तत्र तस्यावस्थामाह—मुक्तस्येति । "निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतिषु मुक्तस्येश्वरेण सह परमसाम्यमुच्यते । तच्च साम्यं भेदगर्भमिति नाभेदवर्णनं युक्तम् । किंतु भगवत्स्वरूपगुणाद्यनुभवे भगवता सहात्यन्तसाम्यं मुक्तस्य । यदाह श्रुति—

१. परः A.B.
२. मान् B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता" इति । अत्र ब्रह्मणा सहेति सहयोगे तृतीया । न प्रकृत्यादित्वादभेदे, अनन्वयात् । सूत्रकारोऽपि, "भोगमात्रसाम्यलिङ्गाच्च" इत्याह । अस्य मुक्तस्य स्वेच्छया सर्वेषु लोकेषु कामचारो भवति । तत्र न कोऽपि प्रतिबन्धः । तथा च श्रूयते—"सर्वेषु लोकेषु कामचारो भवति" इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्" इत्यादि ॥ २२ ॥

श्रुतियों में मुक्त-जीव की ब्रह्मानुभूति मात्र में मुक्त का ईश्वर के साथ परम साम्य कहा गया है, अभेद नहीं । यह मुक्त स्वेच्छा से सभी लोकों में संचरण करता है, इसमें उसके लिए कोई भी प्रतिबन्ध नहीं है ॥२२ ॥

स्वेच्छा च [1]हरिसंकल्पायत्ता मुक्तस्य लभ्यते[2] ।
अनावर्तनशास्त्रं तु [3]कर्मावर्तनिषेधकृत् ॥ २३ ॥

ननु भगवत्पारतन्त्र्यैकस्वरूपस्य मुक्तस्य कथं स्वेच्छया संचार इत्यत्राह—स्वेच्छा चेति । अयंमुक्तः स्वेच्छया संचरतामिति भगवतः संकल्पः । तमनुरुध्य प्रवर्तमानस्यास्य न भगवत्पारतन्त्र्यहानिः । तथाचास्य स्वेच्छाचारोऽपि भगवदधीन इति तादधीन्यं न व्याहन्यत इति भावः । ननु तर्हि यदि मुक्तः स्वेच्छया प्राकृतलोके संचरति, तदा तस्य परमपदादावृत्तिरेव फलति । मुकतस्य पुनरावृत्तिश्च "इमं मानवमावर्तं नावर्तन्ते" "ब्रह्मलोकमभिसंपद्य न च पुनरावर्तते न च पुनरावर्तते" इत्यादिश्रुतिभिः "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इत्यादिस्मृतिभिश्च निषिध्यते । तत्कथमित्यत्राह—अनावर्तनेति । आवृत्तिनिषेधः सर्वोऽपि कर्मनिबन्धनावृत्तिनिषेधपरः, न तु सर्वकर्मविनिर्मुक्तस्य स्वेच्छानिमित्तवृत्तिनिषेधपर इति भावः ॥ २३ ॥

मुक्त-जीव की स्वेच्छा हरिसंकल्प के आयत्त =आधीन होती है । 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्यादि अनावर्तन शास्त्र तो कर्मनिबन्धनावृत्तिनिषेधपरक है, न कि सर्वकर्मविनिर्मुक्त की स्वेच्छानिमित्तावृत्तिनिषेधपरक है ॥२३ ॥

---

१. सादि A.D.
२. दृश्यते A.
३. कर्मायत्त D.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नित्यासंकुचितज्ञाना नित्यं भगवदाज्ञया।
तत्कैकंर्यरता[1] नित्या अनन्तगरुडादयः ॥ २४ ॥

स्वेच्छावतीर्णान् कांश्चिन्निदर्शयिष्यन् प्रथमं तेषां नित्यत्वमाह— नित्येति। नित्यानामनन्तगरुडविष्वक्सेनादीनां ज्ञानं नित्यमसंकुचितप्रसरं भवति। तथा ते भगवदाज्ञानुसारेण नित्यभगवत्कैंकर्यरता भवन्ति। एतेन तेषां नित्यत्वं न केवलं. स्वरूपेण, स्वरूपनित्यत्वस्य बद्धमुक्तनित्यसाधारण्यात्; किंतु गुणतः क्रियया च। बद्धमुक्तयोस्तु गुणक्रिये न नित्यप्रसरे, बद्धदशायां प्रतिबद्धत्वादिति भावः ॥ २४ ॥

अनन्त, गरुड आदि नित्य जीव नित्य, असंकुचित-ज्ञान से युक्त होते हैं, वे भगवान् की आज्ञानुसार नित्य भगवान् की सेवा में रत रहते हैं ॥२४ ॥

एतेषामवतारादिरिच्छयैव हरेरिव[2]।
आधिकारिकतामीषामीश्वरेण निरूपिता[3] ॥ २५ ॥

अनन्तगरुडादयस्तत्तद्दिव्यसूर्यात्मना तत्तदाचार्यात्मना चावतीर्णा दृश्यन्ते। तेष्ववतारेषु भगवदिच्छैव नियामिका। तथाच ते भगवदिच्छानुगुणमाचार्यरूपेणावतीर्य धर्मसंस्थापनमाचरन्त आधिकारिकव्यपदेशं कंचित्कालमवाप्यानन्तरं यथापूर्वं परमपदमारोहन्ति ॥ २५ ॥

इन नित्य-जीवों के अवतार आदि हरि की इच्छा पर ही आश्रित होते हैं। इनके अधिकार और शक्तियां ईश्वर के द्वारा ही निश्चित की जाती है ॥२५ ॥

इति वेदान्तकारिकावल्यां जीवस्वरूपनिरूपणमष्टमं प्रकरणम्।

---

१. कराः B.

२. इह B.

३. नियन्त्रिता C.D.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## ९. ईश्वरनिरूपणम्

**स्वेतराखिलशेषित्वमीश्वरस्य तु लक्षणम्।**
**स सूक्ष्मचिदचिन्मिश्रो विश्वोपादानकारणम्॥ १ ॥**

अथेश्वरो निरूप्यते—स्वेतरेति। स्वस्मादितराणि यान्यखिलानि वस्तूनि चेतनाचेतनात्मकानि, तेषां सर्वेषामपि विषये शेषित्वमीश्वरस्य लक्षणम्। स चेश्वरो विश्वस्य प्रपञ्चस्योपादानकारणं भवति। ननु तर्हि घटोपादानस्य मृद इव सविकारत्वं प्रसज्येतेत्यत्राह—सूक्ष्मेति। ब्रह्मणो विश्वोपादानत्वं न निष्कृष्टस्वरूपस्य। किंतु चिदचिद्विशिष्टस्यैवेति तदात्वे तस्य सविकारत्वमिष्टमेव। विकारनिषेधपराणि वचनानि तु विशेष्यभूतब्रह्मविषयकाणीति भावः। अयमत्राशयः—अवस्थान्तरयोगित्वमुपादानत्वम्। अवस्थायोगित्वं च साक्षात्परंपरासाधारणम्। मृदादेः साक्षादवस्थान्तरयोगः। ब्रह्मणस्तु स्वप्रकारभूतचेतनाचेतनद्वारा। सूक्ष्मचेतनाचेतनविशिष्टं ब्रह्म जगदुपादानम्। तत्राचेतनांशे साक्षादवस्थान्तरयोगः चेतनांशे तु स संकोचविकासयोगितदीयज्ञानद्वारा। एतदुभयपरंपरया स ब्रह्मणीति ब्रह्मोपादानं भवति। परैरपि निर्विशेषब्रह्मणो जगदुपादानत्वमेतादृश्यैव रीत्या समर्थ्यते। ते किलैवमाहुः—अविद्योपहितं ब्रह्म जगदुपादानम्। तत्राविद्यांश एव वस्तुत उपादानत्वम्। तदुपहितब्रह्मांशे तु पारंपरिकस्तद्व्यपदेशः। तथा च श्रुतिः, "मायां तु प्रकृतिं विद्यात्" इति। ब्रह्मोपाधिभूतां मायामेव प्रकृतिमुपादानकारणं विद्यादिति तदर्थः। प्रकृतिशब्दश्चोपादानपरः प्रसिद्धः—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादाविति। वाचस्पतिमिश्राश्चाविद्यासंवलितस्यैव ब्रह्मण उपादानत्वमाहुः—

"अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिलतेजोऽबवनयः॥"

इति। ननु यद्यचेतनगतमवस्थान्तरयोगित्वमवलम्ब्य तद्विशिष्टे ब्रह्मण्युपादानत्वं परंपरया साध्यते, तदा मृद्गतमवस्थान्तरयोगित्वमवलम्ब्य तद्विशिष्टे कुलालेऽपि घटोपादानत्वव्यवहारः कुतो नेष्यत इति चेत्, अपृथक्सिद्धिसंबन्धेन तद्वैशिष्ट्यस्य विवक्षितत्वादिति ब्रूमः। कुलालश्च नापृथक्सिद्धिसंबन्धेन मृद्विशिष्टः॥ १ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

स्वेतर = अपने से भिन्न जो चेतन और अचेतन रूप सम्पूर्ण जगत् है उसका शेषीरूप ईश्वर का लक्षण है। वह ईश्वर सूक्ष्म चित् और अचित् से विशिष्ट है, वही सम्पूर्ण विश्व = प्रपञ्च का उपादान कारण है ॥१ ॥

[१]संकल्पयुक्त एवैष निमित्तं कारणं मतम्।
कालाद्यन्तर्यामितया सहकारि च कारणम्॥ २॥

अथेश्वरस्य निमित्तकारणतामाह—संकल्पेति। सूक्ष्मचिदचिद्विशिष्टत्वरूपेणोपादानत्ववत् "बहु स्यां प्रजायेय" इति बहुभवनसंकल्पविशिष्टत्वरूपेण निमित्तकारणत्वमपि तस्यैत्यर्थः। एवं ब्रह्मणोऽभिन्ननिमित्तोपादानत्वमुक्तं भवति। उपादाननिमित्तयोर्भेदावश्यंभावसाधकान्यनुमानादिप्रमाणानि त्वीश्वरधर्मिग्राहकप्रमाणविरोधादनादरणीयानि। ब्रह्मण एव सहकारिकारणत्वमप्याह—कालेत्यादि। कार्यसामान्यं प्रति कालस्य सहकारिकारणत्वमभ्युपेतं सर्वैरपि। तादृशकालाद्यन्तर्यामितया ब्रह्मणोऽपि सहकारिकारणत्वमिष्टमेवेति भावः। असमवायिकारणं तु नैयायिकपरिभाषितं नास्माकमिष्टम्, कल्पनागौरवादिति भावः॥ २॥

वही ईश्वर बहुभवन-संकल्पविशिष्ट होने से निमित्त कारण है तथा कालादि में अन्तर्यामीरूप होने से सहकारी कारण है ॥२ ॥

कार्यरूपेण वैविध्ययोग्युपादानमुच्यते।
परिणामयितृत्वेन निमित्तमपि तन्मतम्॥ ३॥

पूर्वव्याख्यातमेवोपादानत्वादिकं लक्षयति—कार्येति। वैविध्यमवस्थान्तरम्। परिणामयितृत्वं कार्यरूपेण परिणामस्य प्रयोजकत्वम्॥ ३॥

जो कार्यरूप से विविध अवस्थाओं में परिणत होता है वह उपादान-कारण कहा जाता है। जो कार्यरूप में विविध अवस्थाओं को परिणत करता है वह निमित्त-कारण होता है ॥३ ॥

१. संकल्पयुक् स एवैष A.B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**कार्योत्पत्त्युपकारेण सहकारि च तद्भवेत्।**
**एकविज्ञानसहितसर्वविज्ञानवादतः ॥ ४ ॥**
**उपादानत्वमेवोक्तं मृदादाविव चेश्वरे।**
**तदैक्षतेति संकल्पान्निमित्तत्वं कुलालवत् ॥ ५ ॥**

कार्योत्पत्तौ यदुपकरोति तत्सहकारिकारणं भवति; यथा घटोत्पत्तौ दण्डादिर्नैयायिकानाम्। तत्रोपादानत्वसाधकं प्रमाणमाह—एकेति। श्रुतौ, "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति ब्रह्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते। स च प्रतिज्ञावादो जगद्ब्रह्मणोरुपादानोपादेयभावादनन्यत्व एव संभवति, नान्यथा। अतो ब्रह्मणा उदानत्वमेष्टव्यमिति भावः। तदेवाह—उपादानत्वमिति। उक्तमित्यनेन ब्रह्मण उपादानत्वं नास्माभिः कल्पनीयम्। किंतु श्रुत्यैव कण्ठरवेणोक्तप्रायमित्यर्थः। "यथा मृत्पिण्डेन"इत्यादि श्रुतिमभिसंधायाह—मृदादाविवेति। आदिपदेन लोहमणिनखकृन्तनादिग्रहणम्। निमित्तत्वमुपपादयति—तदैक्षतेति। यथा कुलालस्य घटकरणसंकल्पादिना निमित्तत्वं तद्वत् ब्रह्मणोऽपि बहुभवनसंकल्पादिना निमित्तत्वमित्यर्थः ॥ ४-५ ॥

कार्योत्पत्ति में जो उपकार या सहायता करता है वह **सहकारी-कारण** होता है। सिद्धान्त है कि 'एक ब्रह्म के ज्ञान से सभी वस्तुओं का ज्ञान हो जाता है'। इस मत के अनुसार मृत्तिका आदि के समान ईश्वर उपादान कारण है। 'तदैक्षत' इत्यादि श्रुतिवाक्यों में ईश्वर का संकल्प कथित है, उसके कारण कुम्भकार के समान ईश्वर निमित्त कारण भी है ॥४-५ ॥

**सहकारित्वमप्यस्यान्तर्यामिब्राह्मणोदितम्।**
**सद्ब्रह्मात्मादयः शब्दाः कारणत्वावबोधिनः ॥ ६ ॥**

सहकारित्वमाह—सहेति। अन्तर्यामीति। "यः पृथिवीमन्तरो यमयति" इत्यादिश्रुत्युदितमित्यर्थः। ननु सर्वेश्वरस्यापि भगवतो हरेर्जगदुपादानत्वमप्रामाणिकम्। श्रुत्यादिप्रमाणानि हि सदादीनामेवोपादानत्वं कथयन्ति, न तु हरेः। तथा हि—"सदेव सोम्येदमग्र आसीत्" इति सत्प्रस्तुत्य,"तदैक्षत बहु स्यां प्रजायेय" इति तस्यैव संकल्पपूर्वकबहुभवनम् "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति नामरूपभाक्त्वं च श्रूयते। तथान्यत्र, "ब्रह्म वा इदमग्र आसीत्" इति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्रह्म प्रस्तुत्य, तस्यैव "तदेतद् ब्रह्म क्षत्रं विट् शूद्रः" इत्यादिना ब्रह्मक्षत्रादिनामभाक्त्वं श्रूयते। तथान्यत्र च, "आत्मैवेदमग्र आसीदेक एव" इत्यात्मानं प्रस्तुत्य, तस्यैव "इदं सर्वं यदयमात्मा" इति विविधनामरूपभाक्त्वं श्रुतम्। तथा "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इति नारायणं प्रस्तुत्य, 'ब्रह्मा च नारायणः शिवश्च नारायणः' इत्यादिना तस्यैव ब्रह्मशिवादिनामरूपभाक्त्वं श्रुतम्। एवमव्यवस्थिते विषये कथं भगवतो नारायणस्यैवोपादानत्वमुच्यत इत्यत्राह—सद्ब्रह्मात्मादय इति। कारणत्वावबोधिनः सद्ब्रह्मादयः शब्दाः छागपशुन्यायात् नारायणैकपरा इत्यर्थः। अयं भावः—शङ्कास्पदतया प्रतीयमानाः सदादयः शब्दाः सामान्यशब्दाः। सच्छब्दो हि सत्ताश्रयत्वं प्रवृत्तिनिमित्तमादाय प्रवर्तमानः 'घटः सन्' 'पटः सन्' इत्यादिप्रतीतिबलात् घटादिसाधारणः। एवं ब्रह्मशब्दोऽपि तत्र तत्र जीवप्रधानादिष्वपि प्रयुक्तो दृश्यत इति साधारण एव। आत्मशब्दोऽपि जीवपरसाधारणतया प्रयुज्यमानः साधारण एवेति न ते कारणभूतं वस्तु विशिष्य निर्देष्टुमीशते। कारणभूतवस्तुविशेषज्ञानमन्तरा कारणवाक्यानि न निवृत्ताकाङ्क्षाणि भवन्तीति सदादयः शब्दा नारायणरूपदेवताविशेषे पर्यवस्यन्ति। नारायणशब्दस्तु न साधारणो भवितुमर्हति। नरसंबन्धिनो नाराः; तेषामयनं, ते अयनं यस्येति वा व्युत्पत्त्या निष्पन्नोऽपि नारायणशब्दो न भगवन्तमन्तरा देवतान्तरपरो भवितुमर्हति, तस्य संज्ञाशब्दत्वात्। संज्ञात्वादेव हि "पूर्वपदात्संज्ञायामगः" इत्यनुशासनबलात् णत्वं भवति। "विश्वं नारायणं हरिम्" इति च श्रुतिरेव हरेर्नारायणसंज्ञामाह, "विष्णुर्नारायणः कृष्णो वैकुण्ठः" इति लौकिककोशोऽपि। ननु श्रुतौ देवतान्तराणामपि नमस्कारः श्रूयत इति चेत्, किं तेन ? न हि नमस्करणमात्रेण तेषां जगत्कारणत्वं मोक्षप्रदत्वं चाभिसंहितमिति शक्यते वक्तुम्, कामनान्तरैरपि नमस्कारसंभवात्। "नमस्ते अस्तु मा मा हिंसीः" इत्यादौ हि सान्त्वनार्थमपि नमस्कारः श्रूयते। ननु "एको हि रुद्रो न द्वितीयाय तस्थुः" इति रुद्रस्याप्यद्वितीयत्वं श्रूयत इति चेत्, तत्रत्यरुद्रशब्दः भूयसां न्यायानुसारेण विरोधिनो रोदयतीत्यादिव्युत्पत्त्या भगवति यौगिक आस्थेयः। न हि नारायणशब्दे णत्ववत् रुद्रशब्दे यौगिकत्वबाधकं दृढतरं किंचित्प्रमाणमुपलभ्यत इत्यास्तां तावत्॥ ६॥

अन्तर्यामी-ब्राह्मण में ईश्वर को सहकारी-कारण भी कहा गया है। सत्, ब्रह्म, आत्मा आदि शब्द ईश्वर की कारणता को ही कहते हैं ॥६ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्र च्छागपशुन्यायान्नारायणपरा मताः ।
नामरूपविभागानर्हत्वावस्थासमन्वितम् ।। ७ ।।

सुसूक्ष्मचिदचिद्युक्तमेकं ब्रह्मात्मकं मतम् ।
नामरूपविभागात्प्राङ् न हि भेदोऽवसीयते ।। ८ ।।

मृद्घटादावपि ततस्तदेकमिति गीयते ।
नामरूपाद्यभावेन सच्छब्देनापि गीयते ।। ९ ।।

सामान्यवचनस्य विशेषे पर्यवसानं निदर्शनमुखेन द्रढयति—तत्रेति । "पशुना यजेत" इति विधौ सामान्यतः श्रुतोऽपि पशुशब्दः, "अग्नये छागस्य वपाया मेदसः" इति मन्त्रलिङ्गप्राप्ते छागे यथा पर्यवस्यति तद्वदिति भावः । ननु सदादिशब्दानां नारायणरूपदेवताविशेषे पर्यवसानं न युक्तम् । तथाहि—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति श्रूयते । तत्र एकमिति पदेन स्वगतसजातीयविजातीयभेदरहितं सद्वस्तु जगत्कारणतया प्रतीयते । नारायणस्तु "पतिं विश्वस्य" इत्यादिना विश्वपतित्वेन "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यादिना लक्ष्मीपतित्वेन च प्रतीयते । अतो द्वितीयवस्तुरहितं सदाख्यं ब्रह्मैव जगत्कारणम् । किंच "नेह नानास्ति किंचन" इत्यादिना कृत्स्नभेदप्रतिषेधः क्रियते; इत्याशङ्क्याह—नामरूपेत्यादि । नारायणख्यं परं ब्रह्मैव प्रपञ्चसर्गात् पूर्वं नामरूपविभागानर्हसुसूक्ष्मचिदचिच्छरीरकमभूत् । तदात्वे तत् परं ब्रह्म केवलमेकमेवाभूत् । विभक्तनामरूपवत्त्वं हि सर्गानन्तरभावि । श्रुतावेकशब्दो वक्ष्यमाणबहुभवनपूर्वावस्थापरतया प्रयुक्तः । ब्रह्मणोऽनेकनामरूपभाक्त्वाद्बहुत्वम् । "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति संकल्पपूर्वकजीवरूपानुप्रवेशकृतमिति ततः पूर्वं तस्यैकत्वात् एकमेवेति निर्देशो युज्यते । अत एवाग्र इति पदसार्थक्यमपि । परेषां मते तु ब्रह्मणः सर्वदा सजातीयविजातीयभेदरहितत्वादग्र इति पदस्य वैयर्थ्यमस्वारस्यं च दुरपह्नवम् । "नेह नानास्ति किंचन" इत्यत्रापि न ब्रह्मणि सर्वात्मना पराभिमतभेदप्रतिषेधः । किंत्वब्रह्मात्मकवस्तुनानात्वं प्रतिषिध्यते । तथाहि—तत्र "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति पूर्ववाक्ये ब्रह्मण इन्द्रियभूतपञ्चकाधिष्ठानत्वं प्रतिपादितम् । तत्कथमेकस्यात्मनः संभवतीत्याशङ्क्यामिदं वाक्यं प्रवृत्तम्—"नेह नानास्तीति" । इह "यस्मिन् पञ्च पञ्चजनाः" इत्यादिवाक्यनिर्दिष्टे ब्रह्मणि किंचन नानात्वं नास्तीत्यर्थः । पूर्वस्मिन् वाक्य इन्द्रियादीनां

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ब्रह्मात्मकत्वकण्ठोक्त्या तदविरोधेनाब्रह्मात्मकवस्तुप्रतियोगिकनानात्वं ब्रह्मणि निषिध्यते । न तु निष्कृष्टतत्तद्वस्तुभेदः,ब्रह्मणि स्वेतरवैलक्षण्यस्य प्रमाणशतप्रतिपन्नत्वात् । तस्य सच्छब्दवाच्यत्वमेवं निदर्शनमुखेन निगमयति—मृदिति । अपराह्णे कुलालगृहे प्रसारितान् घटशरावादीन् दृष्ट्वा कश्चिद्वक्ति—'इदं सर्वं प्राक् कुलालव्यापारात् पूर्वं पूर्वाह्णे मृदेकैवासीत्' इति । तत्र घटादिकरणात्पूर्वं मृदस्तत्तन्नामरूपभाक्त्वाभावात् यथैकैव मृदासीदिति व्यवहारः, तथा सृष्टेः पूर्वं हिरण्यगर्भादिप्रपञ्चाभावात् तदैकमेव ब्रह्मासीदिति व्यवहारो युज्यते। नैतावता प्रपञ्चमिथ्यात्वं सिध्यतीति भावः ॥ ७-८-९ ॥

सत्, ब्रह्म, आत्मा आदि शब्द छाग-पशुन्याय से नारायणपरक ही कहे गये हैं । परब्रह्म केवल एक ही है; स्वगत, सजातीय और विजातीय भेद से रहित अथवा द्वितीय वस्तु रहित सदाख्य ब्रह्म एक ही है, कारण कि वह सूक्ष्म चित् और अचित् से विशिष्ट मात्र ही था अतएव वह नाम, रूप जैसे विभाग के अयोग्य अवस्था से समन्वित था । निश्चय ही, घटादि जैसे नाम, रूपविभाग से पूर्व मृत्तिका में कोई भी भेद नहीं हो सकता है । अतएव ब्रह्म एक ही था- यह कहा जाता है । नाम, रूपादि के अभाव के कारण 'सत्' शब्द से भी ब्रह्म ही कहा गया है ॥७-८-९ ॥

तदेवान्तःप्रवेशेन नामरूपविभागकृत् ।
यथा जीवोऽन्तराविष्टो नामरूपविभागभाक् ॥ १० ॥

देवोऽहमिति शब्दैश्च मुख्यवृत्त्याभिधीयते ।
यथा नीलादयः शब्दा नीलाद्यव्यभिचारिणम् ॥ ११ ॥

विशिष्टमेव मुख्यार्थं वदन्ति निरूपाधिकम् ।
तथैव भगवानन्तर्यामी सन्नामरूपयोः ॥ १२ ॥

विभागकृत्स तैः शब्दैर्मुख्यवृत्त्याभिधीयते ।
अमुख्यार्थत्वमेतेषां परैरुक्तं न युक्तिमत् ॥ १३ ॥

तच्च बहुभवनं नामरूपव्याकरणं च तत्तद्वस्त्वन्तरात्मनानुप्रवेशकृतमित्याह—तदेवेति । यद् ब्रह्म सदेवेति वाक्ये एकमेवेति । निर्दिष्टं तदेवेत्यर्थः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"तदैक्षत" इति श्रुतिवाक्येऽपि तच्छब्देन सदेवेति वाक्यनिर्दिष्टं ब्रह्मैव हि प्रतिपादितम्। अन्तःप्रवेशेनेति; "अनेन जीवेनात्मनानुप्रविश्य" "तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यादिवाक्यान्यत्राभिप्रेतानि। तत्र दृष्टान्तमाह—यथेति। यथा जीवो ब्राह्मणादिशरीरान्तःप्रवेशेन "ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात्" इत्यादौ ब्राह्मणादिव्यपदेशं लभते, तद्वदिति भावः। एवं ब्रह्मणस्तत्तदनुप्रवेशकृतं तत्तन्नामरूपभाक्त्वमुपपाद्य तस्य ब्रह्मणस्तत्तच्छब्दैर्मुख्यवृत्त्याभिधानं स्वसिद्धान्तसंमतमुपपादयति—मुख्यवृत्त्येति। ब्राह्मणादिशब्दास्तत्तच्छरीरवाचिनोऽपि तथा तदन्तर्गतजीवेषु मुख्यवृत्तास्तथेति भावः। तत्रैव निदर्शनान्तरमाह—यथा नीलादय इति। नीलादयः शब्दा आकृत्यधिकरणन्यायात् गुणवाचिनोऽपि यथा नीलादिरूपविशिष्टं वस्तु मुख्यवृत्त्याभिदधति, तथेति भावः। तैः शब्दैः; ब्रह्मेन्द्रादिशब्दैः। आह च श्रुतिः—"स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इत्यादि। परे तु मीमांसकादयः नीलादिशब्दानाममुख्यार्थे द्रव्ये पर्यवसानमाहुः; तन्न सम्यगित्याह—अमुख्यार्थत्वमिति ॥ १०-११-१२-१३ ॥

जैसे जीव ब्राह्मण आदि शरीरों में प्रविष्ट होकर ब्राह्मण आदि नाम, रूपविभाग को प्राप्त करता है, वैसे ही वह ब्रह्म तद्-तद् वस्तुओं में आत्मरूप = अन्तर्यामीरूप से प्रवेश कर नाम, रूपविभाग वाला कहलाने लगता है। जैसे- 'देवोऽहम्' = 'मैं देव हूँ' - इत्यादि वाक्यों में प्रयुक्त शब्दों से मुख्यवृत्ति-अभिधा से ही जीव को कहा जाता है, इसी प्रकार जैसे- नीलादि शब्द आकृत्यधिकरणन्याय से गुणवाची होने पर भी निरूपाधिक नीलादिरूप-विशिष्ट वस्तु को ही मुख्यार्थरूप में कहते हैं; ठीक वैसे ही वह ब्रह्म ब्रह्मा, शिव, इन्द्र आदि शब्दों से मुख्यवृत्ति से जाना जाता है, क्योंकि भगवान् अन्तर्यामी रूप से तद्-तद् वस्तुओं में प्रवेश करता है और तद्-तद् नाम, रूपविभाग वाला हो जाता है।मीमांसक आदि नीलादि शब्दों से प्राप्त तद्-तद् वस्तुओं को अमुख्यार्थ ही मानते हैं, किन्तु उनका मत युक्तिमत् नहीं है ॥१०,११, १२-१३ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**शरीराद्यपृथग्भावाच्छब्दा निष्कर्षकेतरे ।**
**विशिष्टमेव श्रीमन्तमभिधास्यन्ति युक्तितः[1] ॥ १४ ॥**

शब्दा हि द्विविधाः—निष्कर्षकाः, विशिष्टवाचिनश्चेति । तत्रापृथक्सिद्धि-संबन्धेन संबद्धान् विशेषणांशान् विशेष्यांशांश्च पृथग्व्यवहर्तुमिच्छया यदा शब्दाः प्रयुज्यन्ते, तदा ते निष्कर्षका इत्युच्यन्ते । यथा पदार्थास्त्रिधा—चितः, अचितः, ईश्वरश्चेति । अत्र चिदादिपदानि केवलचिदादिवाचकानि, न तु तद्विशिष्टेश्वरवा-चकानि । एवमीश्वरशब्दः चिदचित्संवलितमपीश्वरं चिदचिद्भ्यः पृथ-क्कृत्यबोधयतीति स निष्कर्षकः शब्दः । तेभ्य इतरे शब्दास्तत्तत्प्रकारकमीश्वरमेव भगवन्तं श्रियः पतिमभिदधति, पूर्वोक्तयुक्तिबलादिति श्लोकार्थः । । १४ ॥

शब्द दो प्रकार के होते हैं- निष्कर्षक और विशिष्टवाची । इनमें जो अपृथक्सिद्धि-सम्बन्ध से सम्बद्ध विशेषणांश और विशेष्यांश को बताते हैं वे **विशिष्टवाची** होते हैं, किन्तु जो पृथक् व्यवहार की इच्छा से प्रयुक्त होते हैं वे **निष्कर्षक** कहलाते हैं । अतएव सिद्धान्त-पक्ष में निष्कर्षक-भिन्न शब्द शरीरादि से अपृथक्-भाव रखने के कारण विशिष्ट ही श्रीपति भगवान् का ही अभिधान करेंगे-यही युक्तियुक्त है ॥१४ ॥

**सर्वं ब्रह्मेत्यैतदात्म्यमित्यादिव्यपदिष्टयः ।**
**सामानाधिकरण्येन संयुज्यन्तेऽत एव हि ॥ १५ ॥**

निर्विशेषाद्वैतवादिभिर्यानि श्रुतिवाक्यानि स्वमतसर्वस्वतयोद्घोष्यन्ते, तानि वाक्यान्यस्माकमेवानुकूलानि; न परेषामित्याह—सर्वमिति । "सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्वम्" इति । आदिपदेन "तत्त्वमसि" इत्यादयो गृह्यन्ते । एते व्यपदेशाः । अत एव; सर्वेषां शब्दानां ब्रह्मपर्यवसायित्वादेव । सामानाधिकर-ण्येन संयुज्यन्ते संगता भवन्ति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति सामानाधिकरण्यशब्दार्थो वर्णितः । स चास्मन्मत एव संगतः, न परमत इति भावः ॥ १५ ॥

---

१. तत्त्वतः C.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

'सर्वं खल्विदं ब्रह्म', 'ऐतदात्म्यमिदं सर्वम्' - इत्यादि वाक्यों में सभी शब्द ब्रह्मवाची ही हैं, क्योंकि सामानाधिकरण्य से संयुक्त = संगत हैं। जब भिन्न प्रवृत्तिनिमित्त शब्दों की एक अर्थ में वृत्ति होती है तो सामानाधिकरण्य कहलाता है। यह सिद्धान्त हमारे मत में ही संगत है, किन्तु निर्विशेषाद्वैतवादियों के अनुकूल नहीं है ॥१५॥

स्वरूपभिदया भेदश्रुतयोऽस्मन्मते स्थिताः।
विशिष्टाभेदतोऽभेदश्रुतयोऽपि सुनिर्वहाः॥ १६॥

श्रुतयो हि द्विधा भवन्ति—भेदपराः, अभेदपराश्चेति। द्विविधा अपि ता अस्मन्मत एव सुसंगताः, न परेषां मत इत्याह—स्वरूपेति। "पृथगात्मानं प्रेरितारं च मत्वा" "द्वा सुपर्णा सयुजा सखाया" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादयोऽचितां जीवानामीश्वरस्य चात्यन्तवैलक्षण्यं बोधयन्ति। अस्माकं मते चिदचिदीश्वरस्वरूपेषु भेदाङ्गीकारादत्यन्तमेताः श्रुतयोऽनुकूलाः। "सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्वम्" "ब्रह्मैवेदं सर्वम्" इत्याद्यभेदबोधिकाः श्रुतयश्चिदचिद्विशिष्टब्रह्मबोधकत्वात् सुनिर्वाहा इति भावः। परैस्तु अभेदश्रुतीनां प्राधान्यमभ्युपगम्य भेदश्रुतीनां कल्पितभेदपरत्वेन समन्वयः क्रियते। भेदस्य पारमार्थिकत्वेन कल्पितत्वासंभवात् तेषां तथा निर्वाहस्तासां श्रुतीनामप्रामाण्याभ्युपगमपर्यवसायीति हृदयम् ॥१६॥

श्रुति दो प्रकार की है- भेदपरा और अभेदपरा। इनमें 'पृथगात्मानं प्रेरितारं च मत्वा' इत्यादि भेदश्रुति चित्, अचित् और ईश्वर का स्वरूप भेद बताने के कारण हमारे मत के अनुकूल हैं, क्योंकि हमारे मत में उक्त तत्त्वत्रय के स्वरूपों में भेद स्वीकार है। 'सर्वं खल्विदं ब्रह्म' - इत्यादि अभेदश्रुति तो चित् और अचित् से विशिष्ट ब्रह्मबोधक होने से हमारे लिए अत्यन्त अनुकूल है। किन्तु निर्विशेषाद्वैतवादी अभेदश्रुतियों को प्रधान मानकर भेदश्रुति में कल्पित भेद कहकर अद्वैतहेतु भेदश्रुतियों का समन्वय करते हैं, जो कि युक्तिमत् नहीं है, क्योंकि भेद श्रुतियों में भेद पारमार्थिक रूप है, कल्पितरूप नहीं ॥१६॥

कारणात्सूक्ष्मचिदचिद्युक्तात्स्थूलैतदाहितम्।
कार्यं नान्यदिति व्यक्तमारम्भणनयादिषु॥ १७॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु सिद्धान्ते "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिबलादीश्वरस्य प्रपञ्चोपादानकारणत्वमङ्गीकृतम्। ईश्वरस्य प्रपञ्चस्य च भेदोऽप्यङ्गीकृतः। तथा सति कथं कार्यकारणयोरनन्यत्वसिद्धिः। तयोरनन्यत्वं च सर्ववेदान्तिसंमतम्। "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति व्याहरतः सूत्रकृतः संमतं चेत्याशङ्क्य समाधत्ते—कारणादिति। सृष्टेः पूर्वं सूक्ष्मचिदचिद्विशिष्टात् ब्रह्मणः कारणात् सृष्टौ स्थूलचिदचिद्विशिष्टं ब्रह्मोत्पद्यते। तत्र विशेष्यांशे निष्कृष्टे ब्रह्मणि प्रपञ्चात्मना विकारासंभवेऽपि प्रकारांशे अचिति सततविक्रियात्मके तत्संभवात् प्रकारभूताचिद्द्वारा तत्प्रकारिणो ब्रह्मणोऽप्युपादानत्वसंभव इति भावः। एवं परंपरया विकारास्पदत्वं तु प्रामाणिकत्वात् ब्रह्मण इष्टमेवेति भावः। एतदुक्तं भवति। अविकारश्रुतयो विशेष्यभूतब्रह्मपराः। विकारश्रुतयस्तु विशेषणभूताचित्पराः, तत्परंपरया चिदचिद्विशिष्टेश्वरपराश्चेति ॥ १७ ॥

आरम्भणनय आदि में स्पष्टतया कहा गया है कि सूक्ष्मचिदचिद्विशिष्ट ब्रह्म = कारण से उत्पन्न स्थूल चिद्चिद्विशिष्ट ब्रह्म = कार्य अन्य नहीं है, इससे भी भेद में अभेद है। अविकारश्रुति विशेष्यभूत ब्रह्मपर हैं, विकारश्रुति विशेषणभूताचित्पर हैं किन्तु तत्परम्परा से चिदचिद्विशिष्टेश्वरपर हैं। अतएव सिद्धान्त में भेद और अभेद-दोनों ही पारमार्थिक हैं ॥१७ ॥

**निर्गुणत्वपराः कश्चिच्छ्रुतयः सन्ति ता इमाः ।**
**[1]तद्धेयगुणराहित्यं बोधयन्ति ततो ध्रुवम् ॥ १८ ॥**

एवं परस्परं व्याहततयापाततो भासमानानां सगुणनिर्गुणश्रुतीनां समन्वयप्रकारमाह—निर्गुणत्वपरा इति। "निर्गुणम्" "निरञ्जनम्" इत्यादयः श्रुतयो ब्रह्मणो निर्गुणतामाहुः। "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "स्वाभाविकी ज्ञानबलक्रिया च" "सत्यकामः सत्यसंकल्पः" इत्यादयः श्रुतयस्तस्यैव सगुणतामाहुः। एवं परस्परं व्याहततयेव भासमानाः श्रुतयः एवं समर्थनीयाः—सामान्यनिषेधवाक्यानि वाक्यान्तरविहितविशेषेतरविषयाणि परिकल्पनीयानि। यथा "न हिंस्यात्सर्वा भूतानि" इति भूतहिंसानिषेधः "चित्रया यजेत पशुकामः" इत्यादिवाक्यान्तरविहितयज्ञियचित्रादिहिंसाव्यतिरिक्तविषयतया सर्वैरपि प्रमाणतन्त्रैर्वर्ण्यते, तथात्रापि ।-

१. यद्धेय C.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

नर्गुणवाक्यं विहितज्ञानशक्त्यादिकल्याणगुणव्यतिरिक्तहेयगुणविषयतया नेय-मिति न परस्परं व्याघात इति । यथाह—

"उत्सर्गेणापवादं न खलु नयविदः क्षोभणीयं क्षमन्ते
तस्माद्ब्राह्मे गुणादौ विधिविषयमतिक्रम्य तिष्ठेन्निषेधः ।
एवं शान्ते विरोधे नहि समविषयापच्छिदान्यायसिद्धि-
र्दृष्टो नित्यं निषेधः पर इह ततः स्यादुपक्रान्तिनीतिः ॥"

इति ॥ १८ ॥

पुनश्च श्रुति दो प्रकार की हैं- निर्गुणश्रुति और सगुणश्रुति । इनमें 'निर्गुणम्' 'निरञ्जनम्' - इत्यादि निर्गुणश्रुति ब्रह्म अथवा ईश्वर को हेय गुणों से रहित कहती हैं, अतएव इन द्विविध श्रुतियों में परस्पर कोई व्याहतता ही नहीं है ॥१८ ॥

इति वेदान्तकारिकावल्यामीश्वरनिरूपणं नवमं प्रकरणम् ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## १०. अद्रव्यनिरूपणम्

**द्रव्यमेवं निरूप्याथ तदद्रव्यं निरूप्यते।**
**शुद्धसत्त्वं मिश्रसत्त्वमिति सत्त्वं द्विधा मतम्॥ १ ॥**

पूर्वापरसंगतिप्रदर्शनपूर्वकमद्रव्यनिरूपणं प्रतिजानीते—द्रव्यमिति। अद्रव्यमिति। आगन्तुकावस्थावद् द्रव्यम्। तदन्यदद्रव्यम्। अद्रव्याणि च दशधा—सत्त्वरजस्तमांसि, शब्दस्पर्शरूपरसगन्धाः, संयोगः, शक्तिश्चेति। इमानि च द्रव्यं प्रत्यपृथक्सिद्धविशेषणानि भवन्ति। अतस्तेषां गुणत्वेन व्यवहारः शास्त्रेषु। वैशेषिकाद्यभिमतानां गुरुत्वद्रवत्वादीनां यथासंभवं क्लृप्तेषु पदार्थेष्वेवान्तर्भावः सिद्धान्तिसंमतः। तत्र प्रथमं सत्त्वं निरूपयिष्यन् तस्य द्वैविध्यमाह—शुद्धसत्त्वमिति ॥१ ॥

इस प्रकार द्रव्य का निरूपण करके अब उस **अद्रव्य** को कहते हैं। आगन्तुक अवस्था वाला **द्रव्य** है, उससे भिन्न **अद्रव्य** कहलाता है। अद्रव्य दस हैं - सत्त्व, रजस्, तमस्, शब्द, स्पर्श, रूप, रस, गन्ध, संयोग और शक्ति। ये सभी अद्रव्य द्रव्य के अपृथक्सिद्ध विशेषण होते हैं अतएव **गुण** कहलाते हैं। शुद्धसत्त्व और मिश्रसत्त्व भेद से सत्त्व दो प्रकार का होता है ॥१ ॥

**रजस्तमोभ्यामस्पृष्टमद्रव्यं पूर्वमुच्यते।**
**रजस्तमोविमिश्रं तु मिश्रसत्त्वं प्रकीर्तितम्॥ २ ॥**

तत्र शुद्धसत्त्वस्वरूपमाह—रज इति। सत्त्वस्य रजस्तमोभ्यामस्पर्शो नाम सामानाधिकरण्यसंबन्धेन तद्रहितत्वम्। रजस्तमःशून्यद्रव्यवृत्ति सत्त्वं शुद्धसत्त्वमित्यर्थः। तच्च नित्यविभूतौ ईश्वरादिदेहे च। मिश्रसत्त्वमाह—रजस्तम इति। सामानाधिकरण्यसंबन्धेन रजस्तमोविशिष्टं सत्त्वं मिश्रसत्त्वमित्यर्थः। तच्च त्रिगुणे तद्विकारेषु च। शुद्धरजः शुद्धतमश्च न स्तः। एवमेषामद्रव्यत्वपरिगणनेन तेषां द्रव्यत्ववादः सांख्याद्यभिमतः प्रत्युक्तः॥ २ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

जो रजस् और तमस् से अस्पृष्ट अद्रव्य होता है वह **शुद्धसत्त्व** कहलाता है, किन्तु जो रजस् और तमस् से मिश्रित होता है वह **मिश्रसत्त्व** कहा जाता है ॥२ ॥

**अतीन्द्रियं प्रकाशादिनिदानं सत्त्वशब्दितम् ।**
**रजो लोभप्रवृत्त्यादिनिदानं कीर्त्यते तमः ॥ ३ ॥**

सत्वादीनां स्वरूपमाह—अतीन्द्रियेति । अतीन्द्रियत्वे सति प्रकाशादि-कारणमद्रव्यं सत्त्वमिति तल्लक्षणम् । शब्दादिव्यावृत्त्यर्थमतीन्द्रियत्वविशेषणम् । रजस्तमोव्यावृत्त्यर्थः द्वितीयं विशेषणम् । तादृशद्रव्यव्यावृत्त्यर्थमद्रव्यमिति विशे-ष्यम् । रजसो लक्षणमाह—लोभेति । अत्राप्यतीन्द्रियत्वादिविशेषणं तत्प्रयोजनं चानुसंधेयम् । तम इत्युत्तरत्रान्वितं लक्ष्यनिर्देशः ॥ ३ ॥

**सत्त्व** अतीन्द्रिय और प्रकाशादि का कारण होता है । **रजस्** लोभ, प्रवृत्ति आदि का कारण होता है । **तमस्** निम्न प्रकार होता है- ॥३ ॥

**प्रमादमोहादिहेतुरित्थं[१] त्रैगुण्यरूपणम् ।**
**लये समानि चैतानि विषमाण्युदयादिषु ॥ ४ ॥**

प्रमादेति । अत्राप्यतीन्द्रियत्वादिविशेषणं तत्प्रयोजनं चानुसंधेयम् ।

एवं त्रैगुण्यनिरूपणं कृतमित्युपसंहारः । सत्त्वादीनां स्वभावः कार्याणि च भगवता स्पष्टमगायिषत । यथा—

"सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्त्य तु तमः प्रमादे सञ्जयत्युत ।
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ।
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ।

१. त्रैगुण्यस्य निरूपणम् B.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ।
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन"
"ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्तथा अधो गच्छन्ति तामसाः ।"
"यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥"
"आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ।
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ।
यातायामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ।"

इत्यादि । एतानि सत्त्वरजस्तमांसि लये प्रलयकाले समानि; परस्परं न्यूनताधिक्य-वर्जितानि समप्रमाणानि भवन्ति । उदयादिषु उत्पत्तिस्थितिषु विरूपाणि विषमाणि । तत्तत्पुरुषीयादृष्टभेदात् तत्तद्देहेषु तद्द्वारा पुरुषेषु च न्यूनाधिकभावेन संबद्धानि सुखादिकार्यजनकानि भवन्तीत्यर्थः ॥ ४ ॥

जो प्रमाद, मोह आदि का हेतु होता है वह तमस् होता है । इस प्रकार ये तीन गुण हैं । प्रलय में इन तीनों गुणों की साम्यावस्था होती है, किन्तु सृष्टि में ये विषम हो जाते हैं ॥४ ॥

श्रोत्रग्राह्यो गुणः शब्दो वर्णावर्णात्मना द्विधा ।
तालुभेर्यादिजत्वेन भूतपञ्चकवर्त्यसौ ॥ ५ ॥

गुणत्रयं निरूप्यानन्तरं शब्दं लक्षयति—श्रोत्रेति । गुण इति स्वरूपकथ-नम् । न तु लक्षणकोटिप्रविष्टं, प्रयोजनाभावात् । नैयायिकानां तु शब्दत्वजातिव्या-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

वृत्तये गुणशब्द आवश्यकः । अस्माकं तु जात्यनङ्गीकारान्नावश्यक इति भावः । स च शब्दो द्विधा—वर्णात्मकः, ध्वन्यात्मकश्चेति । मानुषताल्वादिस्थानजन्यो वर्णात्मकः । भेरीमृदङ्गादिजन्यो ध्वन्यात्मकः । तत्र वर्णात्मकोऽकारागादिक्षकारान्त एकपञ्चाशतप्रकारः । मातृकापाठे लळयोरभेदात् क्वचित्पञ्चाशत्प्रकारतया व्यपदेशः । क्रत्यादयः संध्यक्षरा इति न पृथक्परिगण्यन्ते । एषां तु संध्यक्षरत्वेऽपि पृथग्वर्णतया सर्वजनप्रसिद्धेः पृथक्परिगणनम् । तेषामपि ह्रस्वदीर्घभेदाः सन्त्येव । प्रयुज्यन्ते च ते वेदे क्वचित् शाखासु लोके च प्राकृतद्रमिडादिषु भाषासु च । संस्कृते तु तद्धटितपदाभावात् न माहेश्वरादिसूत्रेषु तत्परिगणनं कृतम् । शब्दश्चैष पृथिव्यादिभूतपञ्चकवर्ती । न वैशेषिकादीनामिवाकाशमात्रवर्ती, भेर्यां शब्दः, गङ्गाप्रवाहे शब्द इत्यादि प्रतीतेः । स चायं शब्द आकाशेन सहोत्पत्पद्यते विलीयते च ॥ ५ ॥

श्रोत्र से ग्राह्य गुण **शब्द** होता है । वर्ण और अवर्ण भेद से वह दो प्रकार का होता है । मनुष्य के तालु आदि स्थान से उत्पन्न शब्द **वर्णात्मक** होता है तथा भेरी-मृदङ्गआदि से जन्य शब्द **ध्वन्यात्मक** अथवा **अवर्णात्मक** होता है । यह शब्द गुण पंचमहाभूतों में रहता है ॥५ ॥

**स्पर्शस्त्वगिन्द्रियग्राह्यः पृथिव्यादिचतुष्टये ।**
**शीतोष्णादिप्रभेदस्तु शास्त्रान्तरनिरूपितः ॥ ६ ॥**

स्पर्शं लक्षयति—स्पर्श इति । स च पृथिव्यादिभूतचतुष्कवर्ती । स च शीतोष्णानुभयभेदात् त्रिधा । अप्सु शीतः, अग्नावुष्णः, पृथिवीवाय्वोरनुभय इति विवेकः । भूतान्तरसंसर्गात् स्पर्शसंकरानुभवः ॥ ६ ॥

त्वगिन्द्रिय से ग्राह्य **स्पर्श** गुण होता है । जो पृथिवी, जल, तेज और वायु-इन चार भूतों में रहता है । दूसरे शास्त्रों में शीत, उष्ण आदि इसके भेद कहे गये हैं ॥६ ॥

**चक्षुरिन्द्रियनिर्ग्राह्यं रूपमेतच्चतुर्विधम् ।**
**श्वेतरक्ते पीतकृष्णे इति भेदाद् द्विधादिमम् ॥ ७ ॥**

रूपं लक्षयति—चक्षुरिति । रूपस्य चातुर्विध्यं श्वेतादिना । श्वेतस्य द्वैविध्यमाह—द्विधादिममिति ॥ ७ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

चक्षुरिन्द्रिय से ग्राह्य गुण **रूप** कहलाता है। यह चार प्रकार का होता है- श्वेत, रक्त, पीत, और कृष्ण। इनमें श्वेत दो प्रकार का होता है- ॥७॥

**भास्वराभास्वरत्वाभ्यां भास्वरं तेजसि स्थितम्।**
**पृथिवीजलयोश्चैतदभास्वरमुदाहृतम्॥ ८॥**

द्विविधमेव श्वेतरूपं निर्दिशति—भास्वरत्वेति। तेजसि भास्वरशुक्लम्, जले त्वभास्वरशुक्लमित्यर्थः। एवं च रूपं पृथिव्यादित्रिकवृत्तीत्युक्तं भवति। चित्रं नाम पञ्चमं रूपमिति वैशेषिकादयः; तन्न संघातवर्तिनामेषामेव तथा व्यवहारादिहेतुत्वात्॥ ८॥

भास्वर और अभास्वर। **भास्वर** तेजयुक्त वस्तुओं में रहता है और **अभास्वर** पृथिवी और जल में कहा जाता है। इस प्रकार रूप पृथिवी, जल और तेज- इन तीन भूतों में रहता है ॥८॥

**रसनेन्द्रियनिर्ग्राह्यो रसः षोढा स कीर्तितः।**
**घ्राणग्राह्यो गुणो गन्धो द्विधा शास्त्रान्तरेष्विव॥ ९॥**

रसं लक्षयति—रसनेनि। षोढेति। मधुराम्ललवणतिक्तरूक्षकषायभेदात्। एषामेव संघातश्चित्ररस इति न तस्य पृथक्परिगणनं कृतम्। गन्धं लक्षयति—घ्राणेति। अत्रापि गुण इति स्वरूपकथनं न लक्षणकोटिप्रविष्टम्। द्विधेति; सुरभ्यसुरभिभेदेन द्विधेत्यर्थः। पटीरमृगमदादौ सुरभिः। विण्मूत्रादावसुरभिः॥९॥

रसनेन्द्रिय से ग्राह्य रस कहलाता है और वह छः प्रकार का कहा गया है- मधुर, अम्ल, लवण, तिक्त, रूक्ष और कषाय। घ्राणेन्द्रिय से ग्राह्य गुण गन्ध होता है जो दूसरे शास्त्रों में दो प्रकार का कहा गया है ॥९॥

**पृथिव्यामेव गन्धः स्यात्पृथिवीजलयो रसः।**
**पृथिवीजलतेजःसु रूपं स्पर्शः सवायुषु॥ १०॥**

गन्धादीनामाश्रयानाह—पृथिव्यामेवेति। जलादौ तत्प्रतीतिस्तु पृथिवीभागसंसर्गकृता। सवायुष्विति; वायुसहितेषु पृथिवीजलतेजःस्वित्यर्थः॥ १०॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

गन्ध पृथिवी में ही रहता है। रस पृथिवी और जल में रहता है। रूप पृथिवी, जल और तेज में रहता है। स्पर्श वायु सहित पृथिवी, जल और तेज में रहता है ॥१०॥

शब्दः पञ्चसु भूतेषु प्राधान्येनैवमुच्यते।
पञ्चीकरणरीत्या तु सर्वे सर्वत्र संगताः ॥ ११ ॥

पञ्चस्विति। पृथिव्यप्तेजोवाय्वाकाशेष्वित्यर्थः। इदं चाश्रयविशेषकथनं तत्र तत्र तत्तद्गुणभूयस्त्वनिबन्धनमित्याह—प्राधान्येनेति। पञ्चीकरणरीत्या तु सर्वे शब्दादयो गुणाः सर्वेष्वपि भूतेषु वर्तन्त इत्याह—पञ्चीकरणेति। पञ्चीकरणप्रक्रिया तु प्रथमपरिच्छेदे व्याख्यातावगन्तव्या ॥ ११ ॥

शब्द पृथिवी, जल, तेज, वायु और आकाश - इन पांच भूतों में रहता है। उक्त आश्रयविशेषकथन वहाँ वहाँ तद्-तद् गुण की प्रधानता से ही कहा जाता है। पञ्चीकरण-रीति से तो ये सभी गुण सभी भूतों में रहते हैं ॥११॥

संयुक्तप्रत्यये हेतुः संयोग इति कथ्यते।
कार्याकार्यप्रभेदेन स संयोगो द्विधा मतः ॥ १२ ॥

अनन्तरं संयोगाख्यमद्रव्यं निरूपयति—संयुक्तेति। घटपटौ संयुक्ताविंत्यादिप्रत्यये व्यवहारे च हेतुतया संयोगः सिध्यन् संयुक्तव्यवहारहेतुत्वमेव स्वस्य लक्षणमवगमयति। यद्यपि तादृशव्यवहारे घटपटावपि विषयतया हेतू इति तत्रातिव्याप्तिः प्रसजेत्, तथापि लक्षणकोटावद्रव्यत्वस्यापि प्रक्षेपान्न दोष इति हृदयम्। स च संयोगः कार्यः, आकार्यश्चेति द्विविधः ॥ १२ ॥

किन्हीं दो द्रव्यों के संयुक्त-व्यवहार का हेतु संयोग कहा जाता है। वह कार्य और अकार्य भेद से दो प्रकार का कहा गया है ॥१२॥

मेषहस्तादिसंयोगः कार्योऽकार्यो विभोर्विभो।
विभुद्वयस्य संयोगः श्रुत्या युक्त्या च मन्यते ॥ १३ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

तत्र कार्यसंयोगमाह—मेषेत्यादि । परिमितयोर्वस्तुनोः संयोगः कदाचिदेव तयोः क्रियया जायत इति स कार्य इत्यर्थः । स च पुनर्द्विधा—उभयनिष्ठक्रियाजन्यः, अन्यतरनिष्ठक्रियाजन्यश्चेति । तत्राद्यो मेषयोः हस्तयोर्वा संयोगः । द्वितीयः स्थाणुश्येनयोः संयोग इति ज्ञेयम् । अकार्यसंयोगमाह—विभोरिति । विभोर्विभोश्च संयोगोऽकार्य इत्यर्थः । वैशेषिकादयस्तु संयोगसामान्यस्य जन्यत्वं मन्यमाना विभुद्वयसंयोगे तस्य नित्यत्वप्रसङ्गात् तं नाङ्गीकुर्वन्ति । तान् प्रत्याह—विभुद्वयस्येति । श्रुत्येति; "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः" इति श्रुत्या विभोरीश्वरस्य विभ्वन्तरेण संयोगस्य श्रुतत्वात् । युक्त्या चेति; ईश्वरः कालसंयुक्तः कालनैरन्तर्यात् घटवत् इत्याद्यनुमानेनेत्यर्थः । वैशेषिकास्तु संयोगजसंयोगमपीच्छन्ति; यथा—हस्तपुस्तकसंयोगात् कायपुस्तकसंयोग इति; तन्न, अवयवपृथक्त्वेनावयव्यनङ्गीकारात् । यः किल हस्तपुस्तकसंयोगः स एव हस्ताद्यवयवसंघातरूपकायपुस्तकसंयोग इति न ततः पृथगिति भावः ॥ १३ ॥

परिमित दो वस्तुओं का संयोग कदाचित् ही उनकी क्रिया से उत्पन्न होता है अतएव वह **कार्यरूप** संयोग कहलाता है । यह कार्य संयोग दो प्रकार का होता है- उभयनिष्ठक्रियाजन्य और अन्यतरनिष्ठक्रियाजन्य । उभयनिष्ठ क्रियाजन्य है, जैसे- दो मेषों भेढों का संयोग अथवा दो हाथों का संयोग । द्वितीय है, जैसे- स्थाणु और श्येन का संयोग । दो विभुओं का संयोग **अकार्यरूप** संयोग होता है । वैशेषिक विभुद्वय-संयोग होने पर उसकी नित्यता होने से उसको स्वीकार नहीं करते हैं, इसीलिए यहाँ कहा गया है कि सिद्धान्त में विभुद्वय का संयोग श्रुतियुत् और युक्तियुत् है । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः'- इस श्रुति में विभु ईश्वर का दूसरे विभु से संयोग श्रुत है । 'ईश्वरः कालसंयुक्तः, कालनैरन्तर्यात्, घटवत्' - इस अनुमान प्रमाण से भी विभुद्वय का संयोग युक्तियुक्त है । वैशेषिक तो संयोगज-संयोग को भी मानते हैं, जैसे- हस्त-पुस्तक-संयोग से काय-पुस्तक-संयोग है । किन्तु यह उचित नहीं है, क्योंकि अवयव के पृथक् होने से अवयवी नहीं रहता है ।जो हस्त-पुस्तक-संयोग है वही हस्तादि-अवयवसंघातरूपकाय-पुस्तक-संयोग है, आद्य द्वितीय से पृथक् नहीं है ॥१३ ॥

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**तस्मात्कालस्येश्वरेण संयोगोऽपि सुसंमतः ।**
**संयोगाभावरूपो हि विभागो न गुणान्तरम् ।। १४ ।।**

तदेवाह—तस्मादिति । श्रुतियुक्तिसद्भावादित्यर्थः । कालस्येश्वरस्य च विभुत्वेऽपि तयोः परस्परं संयोगः सम्यक्तया मन्तव्य इत्यर्थः । वैशेषिकादयो विभागाख्यं पृथग्गुणमिच्छन्ति । तान्निराकरोति—संयोगाभावेति । संयोगाभाव एव विभाग इत्युच्यते । अभावस्य च भावान्तररूपत्वात् पूर्वदेशसंयोगनाशपूर्वकोत्तरदेशसंयोग एव विभाग इत्यर्थः ॥ १४ ॥

अतएव काल का ईश्वर के साथ संयोग भी सुसम्मत है। विभाग संयोगाभावरूप है अतएव पृथक् गुण नहीं है ॥१४ ॥

**सर्वहेतुषु हेतुत्वनिर्वोढ्री शक्तिरिष्यते ।**
**मणिमन्त्रादिकेष्वेषा प्रसिद्धा सा त्वतीन्द्रिया ।। १५ ।।**

अथ शक्तिं निरूपयति—सर्वहेतुष्विति । हेतुनिष्ठः कार्योत्पादनयोग्यो धर्मविशेषः शक्तिरित्यर्थः । यथा वह्नौ दाहानुकूलो धर्मविशेषः शक्तिरित्युच्यते । तथा मणिमन्त्रादिषु दाहादिप्रतिबन्धजननसाधनभूतो गुणविशेषः शक्तिरित्युच्यते । सा च नेत्रेन्द्रियग्राह्या । किं त्वागमादिग्राह्या । आगमश्च—

"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥

भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ।"

इत्यादिः । नन्वेवं तर्हि शब्देष्वर्थबोधनानुकूला शक्तिरङ्गीकरणीया । तथा सति शब्दस्य गुणाश्रयत्वात् द्रव्यत्वापत्तिरिति चेत्, अत्रोच्यते—शब्दे शक्तिर्नाम न काचिदतिरिक्ता शक्तिर्विद्यते किं तु स स्वरूपेणैवार्थं बोधयति । व्याकरणादयस्तत्र सहकारिण इति नातिरिक्ता शक्तिस्तत्रेति । तथा चाहुः—

"शब्दादिष्वस्ति शक्तिर्यदि कथमिव न द्रव्यतैषां गुणित्वे
सा चेन्नास्त्येव कार्यं किमपि कथमितः स्यादितीदं न युक्तम् ।

शक्तिः शक्ता न वेति स्वयमवमृशतः स्वोक्तदोषप्रसङ्गे
निस्तारश्चेत्स्वभावात्फणिमरणमिह प्रस्तुते किं प्रवृत्तम् ॥"

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इति ॥ १५ ॥

सभी कारणों में कारणता की जो सहायता करती है वह शक्ति कहलाती है। मणि, मन्त्र आदि में यह प्रसिद्ध है, किन्तु शक्ति अतीन्द्रिय होती है ॥१५ ॥

बुद्ध्यादयोऽष्टौ विज्ञाने भावना चान्तराविशन्।
द्रवत्वस्नेहसंख्यानपरिमाणानि वेगकः ॥ १६ ॥

द्रव्यस्वरूपरूपत्वान्नाधिक्यं यान्ति केवलम्।
स्थितस्थापकमेतस्मिन् संयोगेऽन्तर्भवत्यतः ॥ १७ ॥

संयोगाभावरूपत्वात्पृथक्त्वस्य विभागवत्।
गुरुत्वस्यापि शक्तित्वान्नाधिक्यं क्वापि विद्यते १८।

वैशेषिकाद्यभिमतानां बुद्ध्यादिगुणानां धर्मभूतज्ञानेऽन्तर्भावमाह— वुद्ध्यादय इति। अष्टाविति। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्माख्याः, तथा वासनाख्यः संस्कार इति नवापि गुणा ज्ञानेऽन्तर्भवन्ति। तत्र बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः षडपि ज्ञानविकाररूपा इति ज्ञान एवान्तर्भवन्ति। धर्माधर्मावपीश्वरप्रीत्यप्रीतिरूपावितीश्वरज्ञानेऽन्तर्भवतः। वासनाख्यः संस्कारोऽपि ज्ञानावस्थाविशेषः स्मृतिवत्। एवं च धर्मभूतज्ञानस्य द्रव्यत्वेन तस्य विविधावस्थास्पदत्वं युज्यते। तत्रात्मा निर्विकारः। धर्मभूतज्ञानं तु सविकारमिति प्रमाणसंप्रतिपन्नम्। धर्मभूतज्ञानगताः सर्वे विकारा ज्ञानद्वारा तदाश्रयात्मपर्यन्तं व्यवह्रियन्त इत्यवगन्तव्यम्। अत्रेदं बोध्यम्—बुद्ध्यादीनामष्टानां बुद्धिविकारत्वात् तेषामात्मनिष्ठत्वं युज्यते। भावना तु ज्ञाननिष्ठैव, नात्मनिष्ठा। सा हि बुद्धेर्द्रव्यस्य पूर्वमर्थविशेषे सकृत्प्रसृतस्य पुनस्तत्रैवार्थविशेषे तस्य प्रसरणोपयोगिनीति सिद्धान्तः। तथा च तस्या बुद्धिनिष्ठत्वमेवोचितम्। आत्मनिष्ठत्वे तु तद्धर्मभूतधीविकासहेतुत्वं तस्याः कथ्यमानं न युक्तिमनुसरतीति। द्रवत्वस्नेहसंख्यापरिमाणवेगा द्रव्यस्वरूपान्नातिरिच्यन्ते, तावतैव प्रतीतिव्यवहारयोरुपपत्तेः। एवं स्थितस्थापकमप्यवयवसंयोगविशेष एव, नातिरिक्तम्। एतेन वेगो भावना स्थितस्थापकमिति त्रिविधः संस्कार इति वैशेषिकमतमपास्तम्। पृथक्त्वस्यातिरिक्तगुणतां निरस्यति—संयोगाभावेति। यथा संयोगाभावरूपो विभाग इति तस्य न पार्थक्यमङ्गीकृतं, तद्वत् पृथक्त्वस्यापीति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

भाव: । एवं गुरुत्वमपि पतनानुकूलशक्तिरूपमिति न शक्तेरतिरिच्यते ॥ १६-१७-१८ ॥

वैशेषिक-सम्मत बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म और अधर्म नामक आठ गुण धर्मभूतज्ञान में अन्तर्भूत हैं, इसी प्रकार भावनाख्य संस्कार भी ज्ञान में अन्तर्भूत है । द्रवत्व, स्नेह, संख्या, परिमाण और वेग नामक संस्कार- ये सभी द्रव्यस्वरूप होने से अतिरिक्त गुण नहीं है । यह स्थितस्थापक संस्कार भी अवयवसंयोग विशेष ही है, अतिरिक्त गुण नहीं है । विभाग के समान संयोगाभावरूप होने से पृथक्त्व भी गुण नहीं है । इसी प्रकार गुरुत्व भी पतनानुकूल शक्तिरूप ही है, अतिरिक्त गुण नहीं है ॥१६-१७-१८ ॥

कर्मणामपि शक्तित्वं केचिदाहुर्मनीषिणः ।
पदार्थान्तरतामन्ये प्राहुर्वेदान्तवेदिनः ॥ १९ ॥

अथ वैशेषिकाद्यभिमतं कर्मपार्थक्यं निराचष्टे—कर्मणामिति । संयोगविभागजनकं कर्म । तच्च उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदेन पञ्चविधमिति वैशेषिका: कथयन्ति; तन्न, उत्तरदेशसंयोगानुकूलशक्तेरेव कर्मत्वात् । पञ्चविधत्वोक्तिरपि न सम्यक् । उत्क्षेपणम् ऊर्ध्वदेशप्रक्षेप:, अवक्षेपणम् अधोदेशप्रक्षेप इत्यादिरीत्या भेदश्चेत् प्राच्यादिदिग्भेदेनापि विभागप्रसङ्ग: । अत उत्तरदेशसंयोगानुकूला शक्तिरेव कर्मेत्येतावता संतोष्टव्यम् । त एव वैशेषिका: कर्मणामसमवायिकारणत्वमाहु:; तन्न, समवायिनिमित्तसहकार्यतिरिक्तस्यासमवायिकारणस्याप्रसिद्धे: । यदि समवायिकारणप्रत्यासन्नं कारणमसमवायिकारणमिति परिभाष्यते, तदा निमित्तकारणप्रत्यासन्नमनिमित्तकारणमिति किंचित्प्रकल्पयेत । न हि तदस्ति । तस्मात् तदप्यप्रामाणिकमिति मन्तव्यम् । इत्थं कर्मणां शक्तावन्तर्भावमुपपाद्य केषांचिद्वेदान्तिनां मतेन कर्मणां पार्थक्यमाह—पदार्थान्तरतामिति । अयमत्र पृथक्त्वंपरिगणयतां भाव:—विभागपूर्वकोत्तरसंयोगानुकूला शक्ति: कर्मेति पक्षे एकेन जलधारेण विभज्यमाने जलधरान्तरेण तेन वा पुन: संयुज्यमानशिलोच्चये चलतीति प्रत्ययव्यवहारयो: प्रसङ्ग: । यदि देशपदप्रक्षेपेण पूर्वदेशविभागपूर्वकोत्तरदेशसंयोगेत्या-

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

दिना लक्ष्यते, तदापि महाप्रवाहपतितनिष्कम्पमकरे चलतीति प्रत्ययप्रसङ्गः । तस्मात्कर्माख्यं पदार्थान्तरमङ्गीकरणीयमिति ॥ १९ ॥

कुछ विद्वान् कर्म को ही शक्ति कहते हैं, किन्तु दूसरे वेदान्ती शक्ति को पृथक् पदार्थ मानते हैं ॥१९ ॥

प्राचीनग्रन्थपदवीमनुसृत्य यथामति ।
विशिष्टाद्वैतसिद्धान्तफक्किकेत्थं निदर्शिता ॥ २० ॥

ग्रन्थमुपसंहरति—प्राचीनेति । प्राचीनग्रन्थोऽत्र न्यायसिद्धाञ्जनादिः । फक्किकेत्यनेन विस्तरभिया केवलं दिक्प्रदर्शनं कृतमित्युक्तं भवति ॥ २० ॥

इस प्रकार 'न्यायसिद्धाञ्जन' आदि प्राचीन ग्रन्थों का अनुसरण करके विशिष्टाद्वैतसिद्धान्त से सम्बन्धित यह फाक्किका = पुस्तिका लिखी गई है जिसमें विस्तार के भय से सिद्धान्तों का मात्र दिक्प्रदर्शन किया गया है ॥२० ॥

अण्णयार्याध्वरीन्द्रस्य तार्तीयीकतनूभुवा ।
श्रीमद्वेंकटदासेन निर्मिता कारिकावली ॥ २१ ॥

स्वस्याभिजनसंपत्तिमाह—अण्णयार्येति । तार्तीयीक इति । "तीयादीकक् स्वार्थे" इतीकक्प्रत्यये रूपम् । वेंकटदासेनेति स्वनामनिर्देशः । कारिकावलीति ग्रन्थनाम ॥ २१ ॥

अण्णयार्याध्वरीन्द्र के तृतीय पुत्र श्रीमान् वेंकटदास ने इस कारिकावली की रचना की है ॥२१ ॥

निरमायि रमायत्तपरमाद्भुततेजसः ।
मुदमाधातुकामेन मयेयं कारिकावली ॥ २२ ॥

स्वस्य ग्रन्थकरणे परमं प्रयोजनं भगवत्प्रीतिरेकैवेत्याह—निरमायीति । रमायत्तेति । भगवतः सर्वोऽपि महिमातिशयो महालक्ष्मीसंबन्धकारित इति भावः । यथोक्तम्, "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति । स्वतःप्रामाण्यमूर्धाभिषिक्तया श्रुत्यापि विध्यादिसाधारण्येन संशयास्पदे परतत्त्वनिर्णये चिकीर्षिते,

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

"ह्रीश्च ते लक्ष्मीश्च पत्न्यौ"इति विनिर्दिश्य, लक्ष्मीपतित्वपुरस्कारेणैव हि तस्मिन् परदेवतात्वं निर्णेतव्यमासीत् । अमुमेवाशयमभियुक्ताः सरसयोक्त्याविष्कुर्वन्ति । यथा—

"अपाङ्गा भूयांसो यदुपरि परं ब्रह्म तदभू-
दमी यत्र द्वित्राः स च शतमखादिस्तदधरात् ।

अतः श्रीराम्नायस्तदुभयमुशंस्त्वां प्रणिजगौ
प्रशस्तिः सा राज्ञो यदपि च पुरीकोशकथनम् ॥"

इति ॥२२ ॥

मैंने यह कारिकावली रमा-लक्ष्मी के आश्रित\परम-अद्भुत-तेजस्वी भगवान् नारायण को प्रसन्न करने की इच्छा से प्रस्तुत की है ॥२२ ॥

भक्तिप्रपत्त्योरधिदेवताभ्या-
मिवाब्जनाभस्य पदाम्बुजाभ्याम् ।
समर्पयेऽस्मन्मतकारिकावलीं
तदङ्गुलीसंख्यनिरूपणाढ्याम् ॥ २३ ॥

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥"

इत्युक्तरीत्या सात्त्विकत्यागं कुर्वन् स्वग्रन्थं भगवत्पादाम्बुजयोः समर्पयति—भक्तीति । पदाम्बुजाभ्यामिति चतुर्थी । पदाम्बुजे प्रीणयितुमित्यर्थः । "क्रियार्थोपपदस्य च" इत्यादिना चतुर्थी । तदङ्गुलीति तच्छब्देन पदाम्बुजे विवक्षिते । तदङ्गुलीसंख्या दश । दशसंख्याकनिरूपणैराढ्यामित्यर्थः ॥ २३ ॥

मैं भक्ति और प्रपत्ति के अधिदेवता के समान, पद्मनाभ भगवान् विष्णु के चरण-कमलों में विशिष्टाद्वैतसिद्धान्त-सम्मत कारिकावली, जिसमें चरणकमलों में दस अङ्गुली होने से दस निरूपण हैं, को समर्पित करता हूँ ॥२३ ॥

यः श्रीमच्छठमर्षणान्वयपयः सिन्धोः सुधांशुर्महा-
नण्णार्यः समभूद्विभूषितचतुस्तन्त्रो वचःकान्तिभिः ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

**तस्यासौ तनयः समार्जितनयः श्रीवेंकटार्यः सुधीः**
**श्रुत्यन्तान्वयकारिकालिमकरोत्प्रीत्यै महत्यै सताम् २४**

इति श्रीमच्छठमर्षणान्वयपयोधिचन्द्रमःषड्दर्शनीपारदृश्वनोऽण्णयार्यसोमपीथिनस्तृतीयसुतेन बुच्चिवेंकटाचार्येण विरचितायां वेदान्तकारिकावल्यामद्रव्यनिरूपणं नाम दशमं प्रकरणम् ।

स्वग्रन्थस्य श्रद्धेयताभिव्यक्त्यै स्वाभिजनादिसंपत्तिं वर्णयति—य इति । यः शठमर्षणवंशादेव क्षीरसमुद्रादुदितश्चन्द्रोऽभूत्, येन च चतुस्तन्त्री न्यायव्याकरणमीमांसाशारीरकाख्यशास्त्रचतुष्टयं वचःकान्तिभिर्विभूषिता अलंकृता, तस्य अण्णयार्यस्य तनयः सदाचार्यसेवासमधिगतनयसरणिः वेंकटाचार्यनामा सुधीः वेदान्तकारिकावलीनामकमिमं ग्रन्थं सतां महत्यै प्रीत्यै अकरोदित्यर्थः ॥ २४ ॥

वेदान्तार्थनितान्तचिन्तनरताः सन्त्येव सन्तो बुधा-
स्तेषां तोषकृते कृतेति विवृतिर्वेदान्तपद्यावलेः ।
अन्ये मत्सरिणो मितंपचधियो निन्दन्तु नन्दन्तु वा
नैवातो मनसो मनागपि भवेत्सादः प्रसादोऽथवा ॥

इत्थं श्रीशैलसच्चक्रवर्तिवंश्यः सतां मतः ।
श्रीकृष्णोऽकृत वेदान्तकारिकावलिटिप्पणम् ॥
अनेन भगवान् विश्वसर्गस्थित्यन्तकर्मठः ।
सर्वकर्मसमाराध्यः प्रीयतां देवनायकः ॥

महान् श्रीमान् अण्णार्य, जो श्रीमान् शठमर्षण के वंशरूप क्षीरसागर से चन्द्रवत् उदित हुए, ने न्याय-व्याकरण-मीमांसा और वेदान्त- चार शास्त्रों को अपनी व्याख्यानकान्ति से विभूषित किया, उनके समार्जित = सदा आचार्यसेवा से समधिगत पुत्र सुधी-विद्वान् **वेंकटाचार्य** ने सज्जनों की अति प्रसन्नता के लिए इस **वेदान्तकारिकावली** की रचना की है ॥२४ ॥

**इतिवेदान्तकारिकावल्यामद्रव्यनिरूपणं दशमं प्रकरणम् ।**
**प्रमेयनिरूपणं समाप्तम् ।**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# परिशिष्ट-१

## रेखाचित्र द्वारा ग्रन्थ का सिंहावलोकन

**तालिका १: कारिका १.२-१४**

### पदार्थविवेचन

- पदार्थ (२)
  - प्रमाण (३)
    - प्रत्यक्ष
    - अनुमान
    - शब्द
  - प्रमेय १२
    - द्रव्य (२)
      - जड (२)
        - प्रकृति (२४)
        - काल (३)
      - अजड (२)
        - पराक् (२)
        - प्रत्यक् (२)
    - अद्रव्य (१०)
      - सत्त्व
      - रजस्
      - तमस्
      - शब्द
      - स्पर्श
      - रूप
      - रस
      - गन्ध
      - संयोग
      - शक्ति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## प्रत्यक्षनिरूपण

तालिका २: कारिका १.१८-२१




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अनुमाननिरूपण

तालिका ३ : कारिका २.५-९




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## शब्दनिरूपपण

### तालिका ४: कारिका ३.१-१३






CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## प्रमेय विवेचन

**तालिका ५: कारिका ४.१-३**




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## प्रकृतिनिरूपण

**तालिका ६: कारिका ४.३-२६**






CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## पञ्चीकरण

तालिका ७: कारिका ४.२७-२९

| | | | | | |
|---|---|---|---|---|---|
| आकाश | आकाश १/२ | वायु १/८ | तेज १/८ | जल १/८ | पृथिवी १/८ |
| वायु | वायु १/२ | आकाश १/८ | तेज १/८ | जल १/८ | पृथिवी १/८ |
| तेज | तेज १/२ | आकाश १/८ | वायु १/८ | जल १/८ | पृथिवी १/८ |
| जल | जल १/२ | आकाश १/८ | वायु १/८ | तेज १/८ | पृथिवी १/८ |
| पृथिवी | पृथिवी १/२ | आकाश १/८ | वायु १/८ | तेज १/८ | जल १/८ |

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## शरीरनिरूपण

तालिका ८: कारिका ४.३२-३८




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## सप्तद्वीपनिरूपण

तालिका ९: कारिका ४.४५-४८




## कालनिरूपण : -

तालिका १० : कारिका ५.१-३




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## प्रपत्ति के अङ्ग

**तालिका ११ : कारिका ७.१६-१७**




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## तालिका १२ : कारिका ८.६-२०

### जीवनिरूपण




CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## अद्रव्यनिरूपण

**तालिका १३ : कारिका १०.१-१०, १२-१३**

**अद्रव्य (१०)**

- सत्त्व (२)
  - शुद्धसत्त्व
  - मिश्रसत्त्व (वर्णात्मक)
- रजस्
- तमस्
- शब्द (२)
  - वर्ण (अवर्णात्मक)
  - अवर्ण (ध्वन्यात्मक)
- स्पर्श
- रूप (४)
  - श्वेत (२)
    - भास्वर
    - अभास्वर
  - रक्त
  - पीत
  - कृष्ण
- रस (६)
  - मधुर
  - अम्ल
  - लवण
  - तिक्त
  - रूक्ष
  - कषाय
- गन्ध
- संयोग (२)
  - कार्य (२)
    - उभयनिष्ठक्रियाजन्य
    - अन्यतरनिष्ठक्रियाजन्य
  - अकार्य
- शक्ति

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## परिशिष्ट-२

## कारिकार्धानुक्रमणी



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## परिशिष्ट ३

## व्याख्यानोदाहृतप्रमाणानुक्रमणी



CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

## परिशिष्ट ४

## तृतीयपरिशिष्टान्तर्निहित—सङ्केताक्षर-सूची

अधि. अधिकरणसारावलिः तै-आ. तैत्तिरीयारण्यकम्

अष्टा. अष्टाध्यायी. तै-ब्रा. तैत्तिरीयब्राह्मणम्

आत्म. आत्मसिद्धि. तै.-सं. तैत्तिरीयसंहिता

आप-श्रौ. आपस्तम्बश्रौतसूत्रम् नाट्य. नाट्यशास्त्रम्

इष्ट. इष्टसिद्धिः नाम. नामलिङ्गानुशासनम्

ऋ. ऋग्वेदः नित्या. नित्यानुसंधानम्

क. कठोपनिषत् नृ-उ. नृसिंहोत्तरतापिन्युपनिषत्

काठ. काठकम न्या-सि. न्यायसिद्धाञ्जनम्

काव्य. काव्यप्रकाशः न्या. सू. न्यायसूत्रम् ।

कू.पु. कूर्मपुराणम् पर.परमार्थस्तुतिः

कौ. कौषीतक्युपनिषत् परम. परमसंहिता

गी.सं.गीतार्थसंग्रहः पा-शि. पाणिनीयशिक्षा

चतुः चतुः श्लोकी पु-सू. पुरुषसूक्तम्

चू. चूलिकोपनिषत् प्र. प्रश्नोपनिषत्

छा. छान्दोग्यपनिषत् बृ. बृहदारण्यकोपनिषत्

जै-ब्रा. जैमिनीयब्राह्मणम् ब्र.-सू. ब्रह्मसूत्रम्

त-प्र. तत्त्वप्रकाशिका भ-गी. भगवद्गीता

त-मु. तत्त्वमुक्ताकलापः भाम. भामती

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

त-वा. तन्त्रवार्तिकम् म-ना. महानारायणोपनिषत्

तेजो. तेजोबिन्दूपनिषत् मनु. स्मृतिः

तै. तैत्तिरीयोपनिषत् म-भा. महाभाष्यम्

महो. महोपनिषत् वि-ध. विष्णुधर्मः

मी-सू. मीमांसासूत्रम् विष्णु. विष्णुपुराणम्

मु. मुण्डकोपनिषत् वै-सू. वैशेषिकसूत्रम्

मु. मुण्डकोपनिषत् वै-सू. वैशेषिकसूत्रम्

र-सा. रहस्यत्रयसारः शान्ति. शान्तिपर्व

रामा. रामायणम् श्री-को.श्रीगुवणरत्नकोशः

रुद्र. रुद्रकोशः श्रीभा. श्रीभाष्यम्

लक्ष. लक्षणावली श्रुत. श्रुतप्रकाशिका

ल-त. लक्ष्मीतन्त्रम् श्वे. श्वेताश्वतरोपनिषत्

लि-पु. लिङ्गपुराणम् षडर्थ. षडर्थसंक्षेपः

वङ्गी. वङ्गीश्वरकारिका सां-का. सांख्यकारिका

व-पु. वराहपुराणम् सु. सुबालोपनिषत्

वाक्य, वाक्यपदीयम् स्तो-र. स्तोत्ररत्नम्

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

# सन्दर्भ ग्रन्थ-सूची

**(अ) संस्कृत ग्रंथ**

१. अर्थसंग्रह (हिन्दी व्याख्याकार) डा. सत्य प्रकाश शर्मा, साहित्य भंडार मेरठ ।

२. अर्थसंग्रह (हिन्दी व्याख्याकार) प्रो.वाचस्पति उपाध्याय, चौखम्बा संस्करण,वाराणसी ।

३. अभिधावृत्तिमातृका-मुकुल भट्ट, चौखम्बा संस्करण, वाराणसी, १९७३.

४. ऋग्वेद प्रातिशाख्य की वर्गद्वयवृत्ति-विष्णु मित्र ।

५. काव्यप्रकाश-मम्मट,वाराणसी, सं. २०१८.

६. किरणावली—उदयनाचार्य, गायकवाड़ सीरिज़, नं. १५४

७. गौतम धर्मसूत्र ।

८. गीता ।

९. तर्कभाषा-(सम्पादक) आचार्य विश्वेश्वर, वाराणसी, १९६३ ।

१०. तत्वचिन्तामणि-गंगेश उपाध्याय, कलकत्ता, १८९२ ।

११. तर्कसंग्रह—(सं.) बोडास एण्ड ऐथले, पूना, १९६३ ।

१२. तर्कसंग्रह—काशी, १९३९ ।

१३. तर्ककौमुदी—डा.आर.वी. जोशी, पं. रामप्रतापशास्त्री ट्रस्टमाला, ब्यावर (राज.), १९८६ ।

१४. तर्कभाषा (व्याख्याकार) डा. गजानन शास्त्री 'मुसलगांवकर, चौखम्बा प्रकाशन ।

१५. तर्कदीपिका—काशी, १९३९ ।

१६. तन्त्रवार्तिक ।

१७. न्यायसूत्र—गौतम, भारतीय विद्या प्रकाशन, वाराणसी,१९६६ ।

१८. न्यायपरिशुद्धि—वेंकटनाथ, मद्रास संस्करण ।

१९. न्यायसारटीका—चौखम्बा विद्याभवन, वाराणसी ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

२०. न्यायभाष्य—वात्स्यायन, दरभंगा, १९६७।

२१. न्यायसूत्रवृत्ति—विश्वनाथ पंचानन, कलकत्ता, १९१९।

२२. न्यायसिद्धान्त-मुक्तावली—चौखम्बा,प्रकाशन,सं. २०४१।

२३. न्यायबोधनी—(सं.) बोडास और ऐथले।

२४. न्यायबिन्दु—धर्मकीर्ति, चौखम्बा प्रकाशन, वाराणसी, सं. २०३९।

२५. न्यायवार्तिक—उद्योतकर, दरभंगा, १९६७।

२६. न्यायवार्तिक—तात्पर्यटीका, वाचस्पति मिश्र, दरभंगा, १९६७।

२७. न्यायभाष्य—कलकत्ता संस्करण।

२८. न्यायसार—त्रिवेन्द्रम्,१९३१।

२९. प्रशस्तपादभाष्यम्—श्रीधरभट्टप्रणीतया न्यायकन्दलीव्याख्यया संवलितम्, वाराणसी, १९७७।

३०. पातञ्जलयोगसूत्र—पतञ्जलि,चौखम्बा संस्कृत सीरीज़ वाराणसी।

३१. बृहदारण्यकोपनिषद्।

३२. मानमेयोदय—नारायणाद्वय, वाराणसी, १९७८।

३३. मनुस्मृति—१९८२।

३४. रामानुजसिद्धान्तसंग्रह—गवर्नमेण्ट ओरियण्टल,हस्तलिपि,सं. ४९८८।

३५. वेदान्तपरिभाषा—धर्मराजाध्वरीन्द्र, चौखम्बा विद्याभवन, वाराणसी, १९७७।

३६. वेदाङ्ग ज्योतिष।

३७. वेदान्तसारः—(व्याख्याकार) बद्रीनाथ शुक्ल।

३८. वेदान्तसारः—(व्याख्याकार) श्रीवास्तव्य।

३९. सांख्यकारिका—माठरवृत्ति।

४०. सांख्यकारिका (व्याख्याकार) प्रो. ब्रजमोहन चतुर्वेदी, दिल्ली।

**(ब) हिन्दी ग्रन्थ**

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

४१. अग्रवाल—डा. मदनमोहन, भावप्रकाशन, चौखम्बा संस्करण, वाराणसी,१९८३।

४२. उपाध्याय, आचार्य बलदेव, वैदिक साहित्य का इतिहास, वाराणसी।

४३. उपाध्याय, बलदेव—-भारतीय दर्शन, काशी, १९६०।

४४. ऋग्वेदभाष्यभूमिका।

४५. तर्कवागीश, फणिभूषण, न्याय परिचय, वाराणसी, १९७८।

४६. बेवर, अलफ्रेक्ट, भारतीय साहित्य, इलाहाबाद, १९६८।

४७. वैदिक वाङ्मय का इतिहास, भाग-१, खण्ड-२।

४८. शर्मा, ब्रजनारायण, भारतीय दर्शन में अनुमान, म. प्र. अकादमी, भोपाल।

४९. सुखदास, चैन—जैन दर्शन, जयपुर, १९८१।

५०. सुखवाल, राधारानी—बल्लभ सम्प्रदाय के सिद्धान्त, ब्यावर (राज.), १९८५।

५१. सिंह, डा.राजकिशोर, भारतीय दर्शन, द्वितीय संस्करण विनोद पुस्तक भंडार, आगरा, १९८४-१९८५

**(स) अंग्रेजी ग्रन्थ**

52. Bhardwaj K.D. : "The Philosophy of Rāmānuja".

53. Devraj. N.K. : "An Introduction to Shankara's Theory of Knowedge'. Varanasi, 1972.

54. Gupta,Anima Sen : "A Critical study of the Philosophy of Rāmānuja". Chaukhambā Sanskrit Series. 1961.

55. Joshi, Rasik Vihari : Studies in Indian Logic and Metaphysics, Bhatiya Vidya Prakasnan, Delhi, 1979.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

56. Kieth prof. A.B. : Indian Logic, atomism, Delhi, 1977

57. Prof. Kuppuswami : A Primary of Indian Logic, Mailapur,madras, 1961.

58. Singh, Dr. satyavrat : Vedāntadeśika—A study, Chaukhambā vidyā Bhawan, Varānasi,1958.

59. Vara, K.C. : Ramanuja's Theory of knowledge".

60. Vidyarthi,B.P. : "Knoledge, self and good in Ramānuja".

(द) कोशग्रन्थ

६१. आप्टे,शिवराम वामन-संस्कृत हिन्दी,कोश, मोतीलाल बनारसीदास, दिल्ली, पटना वाराणसी ।

६२. झलकीकर, भीमाचार्य, न्यायकोष पूना, १९२८ ।

(ई) पत्र-पत्रिकायें

६३. अग्रवाल, डा. मदनमोहन, शाब्दबोध,परिषद् पत्रिका, वर्ष २१, अंक १, पटना, १९८१.

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri



विशिष्टाद्वैत वेदान्त के प्रवर्तक रामानुज सम्प्रदाय में दीक्षित पं० डॉ० केदारप्रसाद परोहा का जन्म मध्यप्रदेश के रीवा सम्भाग में शहडोल मण्डलान्तर्गत उमरिया तहसील के मानुपुर ब्लाक में सोन नदी के किनारे भोलगढ़ ग्राम के साधारण ब्राह्मण परिवार में द्वितीय संतान के रूप में ३ मार्च १९५८ को हुआ। प्रारम्भिक शिक्षा गाँव से ग्रहण कर संस्कृत जगत् में प्रवेश किया। रणजीत संस्कृत विद्यालय इन्दवार से उच्चतर माध्यमिक शिक्षा लेते हुए उच्च शिक्षा श्री अभयानन्द संस्कृत कालेज से सम्पूर्णानन्द संस्कृत-विद्यालय में सम्पन्न हुई। तदुपरान्त दिल्ली विश्वविद्यालय के संस्कृत विभाग से एम.ए., एम.फिल्. पी-एच्.डी. की उपाधियाँ प्राप्त कीं। साहित्याचार्य, ज्योतिषाचार्य की उपाधियां भी प्राप्त कीं। वर्तमान में श्री लालबहादुरशास्त्री राष्ट्रीय संस्कृत विद्यापीठ, मानित विश्वविद्यालय नई दिल्ली में विशिष्टाद्वैत वेदान्त विभाग में व्याख्याता एवं विभागाध्यक्ष के पद पर सेवा कर रहे हैं।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

